SAMPŪRṆĀNANDA GRANTHAMĀLĀ

Vol. 2

GENERAL EDITOR :—

Kshetresachandra Chattopadhyaya
Director, Research Institute,
Varanaseya Sanskrit Vishvavidyalaya,
Varanasi.




# PĀŚCĀTYA NĪTIŚĀSTRA

*by*

Viśveśvara Siddhāntaśiromaṇi

VARANASI

1963

सम्पूर्णानन्द-ग्रन्थमाला

( २ )

# पाश्चात्त्यं नीतिशास्त्रम्

श्रीविश्वेश्वरसिद्धान्तशिरोमणिना विरचितम्



वाराणस्याम्

१८८५ तमे शकाब्दे

॥ श्रीः ॥

## विज्ञप्तिः

वाग्देवीं मनसा नौमि सर्वविद्यास्वरूपिणीम् ।
यत्कृपालवपातेन नरो ज्ञानमवाप्नुयात् ॥
प्रायेण सर्वदेशेषु सदाचाराः समाः स्थिताः ।
ते च भूयः स्वधर्माणां शास्त्रग्रन्थैः प्रणोदिताः ॥
तानादाय चिरादेव दार्शनिकं विवेचनम् ।
कृतं बहुविधैर्मार्गैः पाश्चात्यदेशपण्डितैः ॥
न तथा भारते वर्षे दार्शनिकैः कृतं पुरा ।
धर्मशास्त्रबुधैर्वापि सिद्धवदेव ते मताः ॥
अतः प्रयोजनं वीक्ष्य तज्ज्ञानस्य प्रसाधने ।
**पाश्चात्यनीतिशास्त्रस्य** कारितं रचनं किल ॥
कर्ता **विश्वेश्वरो** विद्वान् यः **सिद्धान्तशिरोमणिः** ।
दत्ता प्रकाशनयाज्ञोत्तरप्रदेशशासकैः ॥
तामाज्ञामुररीकृत्य प्रकाशे यत्न आस्थितः ।
**सम्पूर्णानन्दमालायां** **क्षेत्रेशचन्द्रशर्मणा** ॥

---

# पाश्चात्त्यं नीतिशास्त्रम्

## विषयानुक्रमणिका

### प्रथमः परिच्छेदः



### द्वितीयः परिच्छेदः



### तृतीयः परिच्छेदः



### चतुर्थः परिच्छेदः

## पञ्चमः परिच्छेदः



## षष्ठः परिच्छेदः



## सप्तमः परिच्छेदः



## अष्टमः परिच्छेदः



## नवमः परिच्छेदः



## दशमः परिच्छेदः

## एकादशः परिच्छेदः



## द्वादशः परिच्छेदः



## त्रयोदशः परिच्छेदः



## चतुर्दशः परिच्छेदः



## पञ्चदशः परिच्छेदः



## षोडशः परिच्छेदः

# पाश्चात्त्यं नीतिशास्त्रम्

## प्रथमः परिच्छेदः

यो भूतं च भव्यं च सर्वं यश्चाधितिष्ठति ।
स्वर्यस्य च केवलं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥

### लक्षणम्

'अयं साधुः, अयमसाधुः', 'इदं समीचीनम्, इदमसमीचीनम्'इत्येवमादयः प्रात्यहिक-व्यवहारसुलभाः सर्वजनानुभवगोचराश्च सदसद्विषयकाः शब्दप्रयोगाः । ते च सापेक्षत्वात् क्वचित् सजातीयं पदार्थान्तरं क्वचिद् वा प्रयोगव्यवस्थापकं निमित्तान्तरमपेक्षन्ते । यत्र हि तारतम्याभिव्यञ्जकस्तादृशः शब्दप्रयोगः, तत्रापाततः सजातीयपदार्थान्तरापेक्षैव प्रयोग-व्यवस्थापिका । यथा 'समीचीनेयं मे लेखिनी, इयं त्वसमीचीना' इत्यत्र लेखिन्योस्तार-तम्याभिप्रायेणैवान्योन्यापेक्षया समीचीनासमीचीनशब्दप्रयोगः । यत्र तु तारतम्यमनभि-प्रेत्यैव 'समीचीनेयं मे लेखिनीति' काचिल्लेखिनी प्रशस्यते, तत्र सजातीयपदार्थान्तराभावेन तद्व्यतिरिक्तमेव किञ्चिन्निमित्तान्तरं प्रयोगव्यवस्थापकमित्यनुमीयते । तच्च कुत इति जिज्ञासा-गम्यम् । 'समीचीनेयं मे लेखिनी' इत्युक्ते, कुत इति समुदेति नैसर्गिकी जिज्ञासा । यतो द्रुतमबाधं च लिखतीति भवति समाधानम् । ततो द्रुताबाधलेखनमेव भवति प्रयोगव्यव-स्थापकं निमित्तम्, न तु सजातीयपदार्थान्तरापेक्षा । यत्रापि लेखिन्यन्तरापेक्षयैव साधुत्व-मभिप्रेतं तत्रापि सजातीयलेखिन्यन्तरापेक्षा आपातत एव भवति निमित्तम्, न तु परमार्थतः। परमार्थस्तु तत्रापि कुत इति जिज्ञासायां समुपस्थितं समाधानरूपं द्रुताबाधलेखनमेव भवति प्रयोगव्यवस्थापकम् । द्रुताबाधलेखनमेव सल्लेखिन्या आदर्शभूतम् । या काचिदपि लेखिनी द्रुतमबाधं च लिखति सैव समीचीना, नापरेत्यादर्शानुगम एव भवति पदार्थानां साधुत्वासाधुत्वे मूल्यावधारणे च व्यवस्थापकं निमित्तमिति पर्यवसितम् ।

यथा च भौतिकेषु पदार्थेषु साधुत्वासाधुत्वावधारणे आदर्शानुगम एव प्रयोजको न तु निमित्तान्तरम्, एवं मानवाचाराणां साधुत्वासाधुत्वावधारणेऽपि आदर्शानुगम एव व्यव-स्थापको हेतुः । 'साधुरयं पुरुषः' इत्युक्ते, कुत इति जिज्ञासायाम् 'यतो वदान्यः परोपकार-परायणश्च' इति भवति समाधानम् । ततो वदान्यता परोपकारपरायणता च पुरुषाणां साधुत्वाव-धारणे आदर्शभूता । यश्च भवत्यादर्शस्तस्यानुगम एव साधुत्वावधारणे प्रयोजकः, तदनु-गमतारतम्यं च साधुत्वतारतम्यप्रयोजकम्, मूल्यावधारणनिमित्तं च भवति । यथा पूर्वस्मिन्नु-दाहरणे वदान्यता परोपकारपरायणता चादर्शभूता, तथान्येऽपि सम्भवन्ति बहव आदर्शा मानवाचारस्य व्यवस्थापकाः । परं ते सर्वेऽवान्तरा एवादर्शाः । ततोऽपि परतरः कश्चिद् महान् जीवनादर्शः, यत्र सर्वेऽप्येतेऽवान्तरादर्शा अङ्गभूताश्चक्रनाभावराणीव संप्रोताः । स

च परमो जीवनादर्श एव निःश्रेयसपदवाच्योऽवान्तरादर्शमुखेन व्यवस्थापयति मानवाचारम्, नयति लोकव्यवहारम्, धारयति च विश्वसंस्थितिम्। अवान्तरादर्शानुसन्धानपुरस्सरं तस्य सर्वानुगतस्य महतो जीवनादर्शस्यानुसन्धानमेव नीतिशास्त्रस्य प्रयोजनम्, समानासमान-जातीयव्यवच्छेदकत्वाच्च लक्षणम्। वदान्यत्वपरोपकारपरायणत्वाद्यवान्तरादर्शसध्रीचीनेन तेनैवायं लोको ध्रियत इति ते जीवनादर्शा "धारणाद् धर्ममित्याहुर्धर्मो धारयते प्रजाः" इत्यादौ धर्मपदवाच्यत्वेनापि स्मृताः। स एव परमादर्शो नयति लोकव्यवहारमिति नीति-पदवाच्योऽपि भवति। अत एव मानवाचारस्य आदर्शानुसन्धायकं शास्त्रं नीतिशास्त्रमिति नीतिशास्त्रस्य लक्षणम्।

मानवाचारश्च मनोगतसङ्कल्पानामभिव्यक्तिमात्रं भवति। "यन्मनसा ध्यायति तद् वाचा वदति, यद् वाचा वदति तत्कर्मणा करोति" इति श्रुतेर्मनोगतः सङ्कल्प एव मूर्तरूपेणा-भिव्यक्त आचारपदवाच्यो भवति। अभ्यस्तश्च सङ्कल्पश्चरित्रमिति चरित्राभिव्यक्तिराचार इत्यप्यभिधीयते। लोकानुमोदितश्चाचारो 'रीति' इत्युच्यते। अत एव आङ्गलभाषायां नीतिशास्त्रपर 'एथिक्स'शब्दः,रीतिप्रचलनस्वभावादिवाचकाद् यूनानीभाषायाः 'इथॉस'-धातोर्निष्पन्नः। 'एथिक्स'विवृतिरूपे 'मॉरल फिलासफी' इति वाक्यखण्डे च प्रयुज्यमानो 'मारल'शब्दश्च 'इथास'धातुवद् रीतिप्रथास्वभावाद्यर्थकाद् लैटिनभाषायाः 'मोरेस' धातोर्निष्पन्नः। अत एवानयोः 'एथिक्स'-'मॉरल'शब्दयोर्व्युत्पत्त्या अपि लोकानुमोदन-सामर्थ्याद् रीतिपदमापन्नस्याभ्यस्तसङ्कल्परूपस्य मानवाचारस्य साधुत्वासाधुत्वव्यवस्थापकं नव्यमेथिक्सशास्त्रम्। अत एव "नीतिशास्त्रं मानवस्वभावस्य पृष्ठभूमाववस्थितानां सिद्धान्तानां विवेचनं तेषां साधुत्वासाधुत्वनिमित्तानां च विश्लेषणं करोति" (नीतिशास्त्र १६२६, पृ० १) इति नव्यनीतिशास्त्राचार्यस्य मैकेंजीमहोदयस्य वचनं संगच्छते।

तदिदं नीतिशास्त्रमेव मानवाचारविषये सदसतोरवधारणेऽन्तर्दृष्टिं ददाति। यत्र च क्वचिदानुवंशिकसंस्कारविशेषात् श्रद्धातिशयबाहुल्याद् वा तर्कनिरपेक्षा लोकप्रवृत्ति-स्तत्रापि नीतिशास्त्रं सोपपत्तिकां विवेकबुद्धिमादधातीति (नीतिशास्त्र के सिद्धान्त, पृ० १०) नव्यनीतिशास्त्राचार्यस्य सेथमहोदयस्य वाचोयुक्तिरुपपन्ना। मानवाचारस्यादर्शाव-धारणमेव नीतिशास्त्रस्य प्रधानं प्रयोजनम्। तत्राप्यवान्तरादर्शापेक्षया परमादर्शस्यैव प्राधान्यम्। यश्चाचारो यावन्मात्रं आदर्शमनुसरति तावन्मात्रं मूल्याङ्कनम् औचित्यं च लभते। य आचारो नियममादर्शं वाऽनुसरति, स 'सदाचार उचिताचार' इत्युच्यते। आङ्गलभाषायां तत्र 'राइट'शब्दः प्रयुज्यते। नियमस्याप्याधारभूतं किञ्चित् प्रयोजनं भवति, तत् शुभशब्दवाचि। आङ्गलभाषायां तत्र 'गुड'शब्दः प्रयुज्यते। तत्र शुभं 'गुड' साध्यम्, सच्च उचितं 'राइट' साधनभूतम्। तदेवं सदाचारः साधनभूतः, परममङ्गलमयः परमादर्शश्च साध्यभूत इति पर्यवसितम्।

## नीतिशास्त्रविज्ञानयोः सम्बन्धः

मानवाचारस्य आदर्शानुसन्धायकं शास्त्रं नीतिशास्त्रमिति नीतिशास्त्रलक्षणं संवृत्तम्। तत्र समानासमानजातीयव्यवच्छेदो हि लक्षणार्थ इति तत्समानासमानजातीयैः शास्त्रान्तरैः

सह नीतिशास्त्रस्य सम्बन्धविवेचनावश्यकी । तत्र कानिचित् शास्त्राणि दर्शनरूपाणि भवन्ति, तानि चाङ्गलभाषायां 'फिलासफी'-पदेन व्यवह्रियन्ते । कानिचित् कलात्मकानि 'आर्ट'पदभाञ्जि भवन्ति । अपराणि च विज्ञानरूपाणि आङ्गलभाषायां 'साइंस'पदवाच्यानि भवन्ति । तत्र नीतिशास्त्रं किं दर्शनाङ्गभूतम्, किं वा कलान्तर्गतम्, अथवा विज्ञानान्तर्भूतमिति समुदेति जिज्ञासा । विज्ञानमपि किञ्चित् प्राकृतिकं विज्ञानम्, अथवा विधायकं विज्ञानं भवति । तद्धि 'नैचुरल साइंस' अथवा 'पाजिटिव साइंस'शब्देन व्यवह्रियते । किञ्चित् क्रियात्मकं विज्ञानं भवति, तच्च 'प्रैक्टिकल साइंस' शब्देनोच्यते । अपरं च आदर्शविज्ञानं नियामकविज्ञानं वा भवति, यद्धि 'नारमेटिव साइंस' अथवा 'रेगुलेटिव साइंस'पदेन व्यवह्रियते । विज्ञानस्य शाखान्तराण्यपि सम्भाव्यन्ते, परमत्र शाखात्रयेणैव प्रयोजनमिति तावन्मात्रं प्रदर्शितम् ।

तत्र प्राकृतिकविज्ञानाङ्गभूतं नीतिशास्त्रमिति हर्बर्टस्पेन्सरादय उत्क्रान्तिवादिन आमनन्ति । तन्मतेन निखिलमपि विश्वमिदं क्रमिकेण विकासेनैव वर्तमानावस्थां प्राप्तम् । जीवसृष्टिरपि 'प्रोटोप्लाजमा'संज्ञकात् कललरसात् समुद्भूताद् एकघटकमात्रात् सिङ्गिल सेल'अमीबा'ख्यात् कीटाणुविशेषादुत्पन्ना मत्स्यमण्डूकादिक्रमेण विकासमनुभवन्ती परःसहस्रैर्वर्षैः वर्तमानं रूपं प्रपेदे । तस्यामेव विकासपरम्परायां कदाचिद् वानराः समुद्भूताः । त एव वानरा मानवस्यादिपुरुषाः । वानरदेहान्मानवदेहस्य वानरमस्तिष्काच्च मानवमस्तिष्कस्य यस्ते विकासस्तेषामभिमतः । तदेवं वानरेभ्य अस्माकमादिपुरुषा आरण्यका भिल्लादयः समुद्भूताः । तेषां च मस्तिष्कविकासक्रमेण भूयसा कालेन ऐदंयुगीनं नीतिशास्त्रं प्रवृत्तमिति प्राकृतिकविज्ञानाङ्गभूतं विधायकविज्ञानाङ्गभूतं 'नैचुरल साइंस', 'पाजिटिव साइंस' वा नीतिशास्त्रमिति इवोल्यूशन-उत्क्रान्तिवादिनां तेषां वाचोयुक्तिः ।

परं डार्विनोपज्ञोऽयं जीवविकासराद्धान्त एव न प्रामाणिकस्तर्कसङ्गतो वा । न खलु परःसहस्रैरपि वर्षैराम्रबीजान्निम्बवृक्षस्य निम्बबीजाद् वाम्रवृक्षस्योत्पत्तिर्दृश्यते । जातेः समानप्रसवात्मिकत्वान्न कदाचिदपि महिषादश्वस्य, अश्वाद् वा महिषस्य सम्भवः । न कदाचिन्मरिचं द्राक्षायते, न वा द्राक्षा मरिचायते । यत्रापि कृत्रिमैरप्राकृतिकैर्वा साधनैराम्रफलादौ रसाकारादिवैलक्षण्यम्, अश्वतरादिप्राणिविशेषस्योत्पत्तिर्वा दृश्यते, तत्रापि तद्बीजादीनां तादृशपदार्थान्तरोत्पत्तावसामर्थ्याद् न वैजात्यम् । अत एव वानरान्मनुष्यस्योत्पत्तिरिति सर्वं वैयात्यवल्गितम्, अप्रामाणिकं च; न तु तत्र क्षोदक्षमं तत्त्वं किञ्चिदपि । यथा निम्बादिवृक्षाणां समानप्रसवात्मिका विभिन्ना जातयस्तथान्येषामपि गजाश्वादीनां समानप्रसवात्मिका भिन्ना एव जातयः । सर्गादौ च तत्तज्जातीयानां प्राणिनां वैजात्येनैवोत्पत्तिर्न तु कालान्तरे जात्यन्तराज्जात्यन्तरविकासः । अत एव पुरुषसूक्तादौ "तस्मादश्वा अजायन्त ये के चोभयादतः । गावो ह जज्ञिरे तस्मात् तस्माज्जाता अजावयः ॥" इत्यादिना सर्गादौ पार्थक्येनैव विजातीयानां प्राणिवर्गाणां समुत्पत्तिराम्नाता ।

प्रकृते च नीतिशास्त्रस्य प्राकृतिकविज्ञाने ( नैचुरल और पाज़िटिव साइंसेस ) अन्तर्भावो भवितुमर्हति न वेति विषये नीतिशास्त्रस्य प्राकृतविज्ञानाङ्गतामुररीकुर्वतां हर्बर्टस्पेन्सरादीनां मतमभिनवमीमांसयापि न शोभनं प्रतिभाति । प्राकृतिकं हि विज्ञानं बाह्यमनुभूयमानं स्वलक्षणं (फैक्ट्स) तथ्यं परामृशति, न त्वादर्शम् ; नीतिशास्त्रं चादर्शमेवानु-

सन्धत्ते, न तु स्वलक्षणं (फैक्ट्स) तथ्यं विवेचयतीति तयोर्मौलिकं भेदबीजम्। स्वलक्षणानां (फैक्ट्स) तथ्यानां संग्रहः, वर्गीकरणम्, तदनुस्यूतानां नियमानां च विवेचनमित्येतावन्मात्रं प्राकृतिकविज्ञानस्य क्षेत्रम्। तत्र च न नीतिशास्त्रस्य कश्चन सम्बन्धः। मानवाचारस्यावान्तरादर्शावधारणपुरस्सरं निःश्रेयसभूतस्य परमादर्शस्यावधारणम्, तदनुकूलं च मानवाचाराणां मूल्याङ्कनं नीतिशास्त्रस्य कार्यम्। न चात्र कस्यापि प्राकृतिकविज्ञानस्य कथञ्चिदपि प्रवेशः सम्भवतीति न प्राकृतिकविज्ञानाङ्गं तदन्तर्भूतं वा नीतिशास्त्रम्।

नीतिशास्त्रं व्यवहारसंम्बद्धमाचारसम्बद्धं वा भवतीति केचन तस्य क्रियात्मकविज्ञान-(प्रैक्टिकल साइंस)रूपतां ब्रुवते। तदपि न समीचीनम्, कस्यापि फलविशेषस्य सिद्धये समुपयुक्तानां साधनविशेषाणामनुसन्धानमेव क्रियात्मकविज्ञानस्य विषयः। यथा चिकित्साशास्त्रं भवति क्रियात्मकविज्ञानाङ्गम्। तद्धि शास्त्रमातुराणां रोगनिवृत्तिसाधनान्यनुसन्धाय तद्विनियोगेन च रोगनिवृत्तिं सम्पादयतीति तद् भवति क्रियात्मकं विज्ञानम्। आरोग्यस्यादर्शावधारणमात्रं न चिकित्साशास्त्रस्य प्रयोजनम्, किन्तु तदौपयिकानां साधनानामनुसन्धानं विनियोगश्च तस्य प्रमुखं कार्यम्। अत एव तत् क्रियात्मकं विज्ञानमुच्यते। नीतिशास्त्रस्य तु मानवाचाराणामादर्शावधारणं मूल्याङ्कनमात्रं च प्रधानं प्रयोजनम्, न तु विनियोग इति नीतिशास्त्रं क्रियात्मकविज्ञानाद् दूरं विभिद्यते।

विज्ञानस्य कलायाश्च मध्यवर्तिनी क्रियात्मकविज्ञानस्य स्थितिः। विज्ञानं हि ज्ञानं शिक्षयति, कला चानुष्ठानम्। क्रियात्मकं विज्ञानं चानुष्ठानस्य प्रकारम् इतिकर्तव्यतां बोधयतीति कलाविज्ञानयोर्मध्यवर्तिनी तस्य स्थितिः।

आदर्शविज्ञान(नारमेटिव साइंस)नाम्ना नियामकविज्ञान(रेगूलेटिव साइंस)नाम्ना वा भवति तृतीयोऽपि विज्ञानभेदः। यथा चास्य नाम्ना प्रतीयते, नियामकानामादर्शानामवधारणमेवास्य नारमेटिव-रेगूलेटिवादिपदवाच्यस्य नियामकविज्ञानस्य मुख्यं कार्यम्। न्यायशास्त्रम्, सौन्दर्यशास्त्रम्, नीतिशास्त्रं चास्मिन्नेवादर्शविज्ञानेऽन्तर्भवन्ति। आदर्शानामवधारणमेव नियामकविज्ञानानां मुख्यं प्रयोजनम्। तच्च न्यायसौन्दर्यनीतिशास्त्रेष्वप्यविरुद्धमिति तत्रैवैषां शास्त्राणामन्तर्भावः। 'सत्यं शिवं सुन्दरम्' इति त्रिरूपात्मकं परप्रेमास्पदं तत्त्वं मानवस्य ध्येयभूतम्। तेषां च त्रयाणां मध्ये सत्यस्य ज्ञानात्मकवृत्त्या, शिवस्य क्रियात्मकवृत्त्या, सुन्दरस्य च रागात्मकवृत्त्या सह सम्बन्धः। तत्र सत्यानुसन्धानपरं न्यायशास्त्रं बौद्धिकनिर्णयानां सदसत्त्वावधारणक्षमानादर्शाननुसन्धत्ते, तेषां निर्णयानां मूल्याङ्कनं च करोति। सौन्दर्यानुसन्धानपरं सौन्दर्यशास्त्रं यद्धि आङ्गलभाषायाम्'एस्थैटिक'पदवाच्यं भवति, सौन्दर्यस्यादर्शमवधारयति, तदनुसारं मूल्याङ्कनं च विधत्ते। एवं शिवानुसन्धानपरं नीतिशास्त्रं नैतिकमाचारादर्शं व्यवस्थाप्य तदनुसारमाचाराणां मूल्यमङ्कयति। तदेतच्छास्त्रत्रयमादर्शमात्रव्यवस्थापकम्, न वस्तुवृत्तापेक्षि, न स्वलक्षणतत्त्वावगाहि वा। अत एवादर्शविज्ञानं नियामकविज्ञानं वेति व्यवह्रियते। तदेवं नीतिशास्त्रं प्राकृतिकविज्ञानाद् भिन्नमादर्शव्यवस्थापकं विज्ञानमस्तीति (नीतिशास्त्र के सिद्धान्त, पृ० ३७) सेथमहोदयः।

## नीतिशास्त्र-दर्शनयोः सम्बन्धः

परं श्रीमैकेंजीमहोदयस्तु (नीतिशास्त्र, पृ० ११) नीतिशास्त्रस्य दर्शनाङ्गत्वं समर्थयति। तस्यायमभिप्रायो यद् विज्ञानं तु इन्द्रियगोचरविषयैकदेशसम्बद्धं भवति, इन्द्रियग्राह्यस्यैव

विषयस्य विवेचनं करोति। परं नीतिशास्त्रं त्विन्द्रियातीतस्य नैतिकस्यादर्शस्यानुसन्धानं विवेचनं च करोति। विज्ञानं मानवानुभवस्यैकदेशं विवेचयति, नीतिशास्त्रं च परममङ्गलमयस्य निःश्रेयसपदवाच्यस्य नैतिकस्याचारादर्शस्य निरूपणे स्थूलमिन्द्रियगोचरं विषयमतिक्रम्यातीन्द्रियं दार्शनिकं क्षेत्रं प्रविशतीति नीतिशास्त्रस्य दर्शनाङ्गत्वमिति मैकेंजीमहोदयः।

परमपरेभ्यस्तन्मतं नाभिरोचते। ते नीतिशास्त्रस्य दर्शनाङ्गत्वं प्रत्याख्याय नियामकविज्ञानान्तर्भावमेव समर्थयन्ति। ईश्वरस्यास्तित्वम्, आत्मनो नित्यत्वम्, कर्मस्वातन्त्र्यं चेति सिद्धान्तत्रयं नीतिशास्त्रस्याधारभूतम्। नीतिशास्त्रं दार्शनिकान् सिद्धान्तानेतान् सिद्धवदभ्युपगच्छति, न तु तत्साधनाय प्रमाणावधारणाय वा प्रयतत इति तस्य दर्शनतो भेदकं लिङ्गम्। किञ्च, नीतिशास्त्रमपि वैज्ञानिकीं प्रक्रियामवलम्ब्य नैतिकतत्त्वानामध्ययनम्, वर्गीकरणम् नैतिकादर्शानुसारं तद्विवेचनं च करोतीति तस्य दर्शनतो भेदकं विज्ञानत्वसाधकं द्वितीयं लिङ्गम्। किञ्च, तन्नैतिकादर्शं तार्किकादर्शात् कलादर्शाच्च विभेदयति, वास्तविकतासूचकनिर्णयेभ्यश्च (फैक्चुअल जजमेन्ट) तारतम्यसूचकमूल्यावधारणनिर्णयान् पृथक्करोतीति तृतीयं नीतिशास्त्रस्य दर्शनतो भेदकं लिङ्गम्। तदेवमादर्शमात्रावधारकं नीतिशास्त्रं दर्शनशास्त्रतो भिन्नं नियामकविज्ञानमात्रं भवतीति सेथप्रभृतीनामाशयः।

## कलानीतिशास्त्रयोर्भेदः

नीतिशास्त्रं क्रियात्मकविज्ञानाङ्गं न भवतीति पूर्वं विवेचितम्। तद्धि यदा क्रियात्मकं विज्ञानमपि न भवति तदा तस्य कलारूपता तु स्वत एव दूरापहता भवति। कलायां हि स्थूलस्याधारस्यापेक्षा भवति। आधारस्य स्थूलतातारतम्येनैव कलायाः स्थौल्यमुपादेयतातारतम्यं च भवति। स्थापत्यकलायां स्थूलतमः प्रस्तर एवाधारः। प्रस्तराधारेणैव सुमनोहरां भावाभिव्यञ्जनक्षमां मूर्तिं निर्माय कलाकारः स्वकलाचातुर्यमभिव्यनक्ति। चित्रकलायां तदपेक्षया सूक्ष्म आधारो भवति। सङ्गीतकलायां ततोऽपि सूक्ष्म इति सौक्ष्म्यतारतम्येन कलायाः सौष्ठवतारतम्यमपि भवति। औद्योगिकासु ललितकलासु च सर्वत्रैव मूर्त एवाधार अपेक्ष्यते। नीतिशास्त्रं च न मूर्ताधारापेक्षि, तस्य नैतिकादर्शमात्रव्यवस्थापकत्वादिति कलातो नीतिशास्त्रस्य प्रथमो भेदः। मूल्यावहानां वस्तूनामुत्पादनमेव औद्योगिककलानां ललितकलानां च साक्षात् परम्परया वा प्रयोजनम्। औद्योगिककलाकारः प्रात्यहिकव्यवहारोपयोगीनि वस्तूनि निर्माति, ललितकलाकारश्च स्वतो मूल्यवन्ति वस्तूनि रचयति। उभयत्रापि मूल्यावहं लौकिकं प्रयोजनमभिलक्ष्यैव लोकप्रवृत्तिः। नीतिशास्त्रे परममङ्गलमयस्य (हाइएस्ट-गुड) निःश्रेयसाख्यस्य प्रयोजनस्य सत्त्वेऽपि तत्र मूल्यावहात् कलाप्रयोजनाद् वैजात्यमेवेत्यपरोऽपि नीतिशास्त्रस्य कलातो भेदको हेतुः।

किञ्च, नैतिकताया वैशिष्ट्यं सङ्कल्पनिष्ठम्। बाह्यकार्याभावेऽपि प्रेरणाऽभिप्रायप्रयोजनादिरूपया मानसवृत्त्यापि नैतिकत्वमनैतिकत्वं वाभिलक्ष्यते। कस्याप्यार्तस्य विपन्नस्य वा विपत्तिमवलोक्य यद्यस्मन्मनो द्रवीभवति, तत्साहाय्यार्थमुद्दामान्तरिकी प्रेरणा समुद्भवति, आकुलयति च नश्चेतांसि, तदानतिक्रमणीयाद् बाधाविशेषात् तदार्तिनिराकरणाक्षमत्वेऽपि नैतिकत्वमक्षतमेव। भौतिकसाहाय्यापेक्षया तादृङ्नैतिकभावनात्मकस्य साहाय्यस्य मूल्यमध्यात्मदृशा बहुतरं भवति। कस्यापि व्यापारविशेषस्य नैतिकं मूल्यमभिप्रायप्रेरणादिमानसव्यापारनिष्ठम्, न तु तस्य दृश्यपरिणामनिष्ठं भवति। अत एव कस्याप्यार्तस्य

कष्टोपशमार्थं सर्वात्मना प्रयतमानेऽपि चिकित्सके यदि तदार्तिर्नोपशाम्यति, वर्धते वा, दैवदुर्विपाकाद् वा विपद्यते गदातुरस्तदा बाह्यपरिणामस्य वैपरीत्येऽपि चिकित्सको दोषभाङ् न भवति। अत एव नीतिशास्त्रस्य वैशिष्ट्यं प्रेरणाभिप्रायादिरूपे मानसव्यापारे, न तु तस्य दृश्यपरिणामे। कलायाश्च वैशिष्ट्यं न सङ्कल्पमात्रनिष्ठं न वा मानसव्यापारमात्रप्रयोज्यम्। तत्तु दृश्यपरिणाममात्रावधार्यम्। चित्रकारस्य चातुर्यं न मानसव्यापारनिष्ठम्। अचित्रकारोऽपि मानसव्यापारमात्रेण मानसिकं मनोहरं चित्रं निर्मातुं प्रभवति। तस्माच्चित्रकारस्य चातुर्यं कलाभिव्यक्तेर्दृश्यपरिणामेनैवावधार्यते, न तु मानसव्यापारमात्रेणेति कलातो नीतिशास्त्रस्य विभेदकस्तृतीयो हेतुः।

किञ्च, कलाया वैशिष्ट्यं यद्यपि सङ्कल्पात्मकेन मानसव्यापारेण नावधार्यते, अपि तु दृश्यपरिणामेनैव; तथापि तद्वैशिष्ट्यं न व्यापारमात्रनिष्ठम्, किन्तु शक्तिमात्रेणाप्यवतिष्ठते। यो हि चित्रकारो मनोहरं चित्रं निर्माति, स तु भवत्येव चित्रकारः। परं यत्र चित्राङ्कणक्षमता साधीयसी विद्यते, स परित्यक्ततद्व्यापारोऽपि कुशलश्चित्रकार इत्युच्यते। नैतिकदृष्ट्या साधुत्वावधारणे तु शक्तिर्नापेक्ष्यते, किन्त्वनुष्ठानमेव। सत्यभाषणक्षमता तु सर्वत्रापि सम्भाव्यते, परं तावता न सर्वेषां सत्यवादित्वं भवति। सत्यवादिनस्तु त एव ये सत्यभाषणपरायणाः। एवं यः कर्तव्यानुष्ठानपरायणः, स एव धार्मिको न तु केवलं कर्तव्यानुष्ठानशक्तिमात्रेण धार्मिकत्वम्। सर्वेऽपि धनिनो धनसम्पन्नत्वाद् दाने शक्ताः, परं न ते वदान्याः। यस्तु क्रियात्मकरूपेण दानपरायणः, स एव वदान्यः। तदेवं नैतिकं वैशिष्ट्यमनुष्ठाननिष्ठमेव, कलावैशिष्ट्यं च शक्तिमात्रेऽप्यवस्थितमित्यन्यदपि विद्यते कलातो नीतिशास्त्रस्य व्यावर्तकं निमित्तम्। तस्मान्नीतिशास्त्रं कलातः सर्वथैव भिन्नमिति न कलायां कथमपि नीतिशास्त्रस्यान्तर्भावः।

## प्रयोजनम्

तदेवं मानवाचारस्यादर्शानुसन्धायकं शास्त्रं नीतिशास्त्रमिति समानजातीयाभ्यां दर्शनविज्ञानाभ्याम्, असमानजातीयाच्च कलाशास्त्राद् व्यावर्तकत्वान्नीतिशास्त्रस्य सम्पूर्णं लक्षणम्। एतल्लक्षणानुसारं नीतिशास्त्रस्याचारादर्शमात्रव्यवस्थापकत्वम्, न तु विधिनिषेधशास्त्रवद् इदमित्थतया कर्तव्यविशेषस्य विधायकत्वं निषेधकत्वं वा। तस्मादिदमित्थतया विधिनिषेधयोरत्रानुपलब्धेर्निष्प्रयोजनं नीतिशास्त्रम्। आदर्शमुखेन कथञ्चिद् तद्व्यवस्थापकत्वेऽपि च धर्मशास्त्रादेरेव साक्षात्तन्निश्चये पुनरपि व्यर्थमेव नव्यं नीतिशास्त्रम्। न चास्य क्वचित् प्रवर्तकत्वं निवर्तकत्वं वा, तद्विशेषज्ञानवतामपि विदुषामसत्यभाषणादौ विपरीताचारे प्रवृत्तिदर्शनात्, अनधीतनीतिशास्त्राणामपि च स्वत एव धर्मानुष्ठानपरायणत्वदर्शनाच्च। तस्मान्नीतिशास्त्राध्ययनं निष्प्रयोजनमफलं चेति केषाञ्चिद् विप्रतिपत्तिः।

अत्रोच्यते—धर्मशास्त्रादिभ्यः साक्षादवगतेऽपि विधौ प्रतिषेधे च व्यावहारिके जीवने प्रत्यहं तादृशा अवसरा समुपस्थिता भवन्ति, यत्र विपश्चितोऽपि कर्तव्यावधारणे विमुह्यन्ति। प्रसिद्धश्च तादृशेषु प्रसङ्गेषु गीतोपदेशप्रयोजकः पार्थस्य व्यामोहः। अत एव "धर्मस्य तत्त्वं निहितं गुहायाम्", "किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः" इत्याद्या अभियुक्तयः सङ्गच्छन्ते। तादृशेष्ववसरेषु मानवाचारस्यादर्शानुसन्धायकं नीतिशास्त्रं कर्तव्याकर्तव्यावधारणक्षमं कषपाषाणनिभं तादृशमादर्शमुपस्थापयति, येन झटित्येव स्फुटीभवति कर्तव्या-

कर्तव्ययोस्तारतम्यम्, विधूताखिलसन्देहसन्तानश्च विद्युद्धारयेवालोकितः संप्रकाशते गन्तव्यो मार्गः। न चायमभिनवः कश्चन नीतिशास्त्रस्य पन्थाः। अत एवायं मार्गो धर्मशास्त्रस्य सारभूतः। आपाततो गृहीतधर्मशास्त्रार्था विधिप्रतिषेधात्मकमेव धर्मतत्त्वमामनन्ति। तद्रहस्यविदस्तु विधिप्रतिषेधानुस्यूतमादर्शभूतमेव धर्मतत्त्वमामनन्ति। तदेव धर्मतत्त्वं गुहायां निहितमभिहितम्। नीतिशास्त्रावलम्बेन च सुलभा भवति तदुपलब्धिरिति तद् धर्मशास्त्राविरोधि, तदुपोद्बलकं च नीतिशास्त्रमिति न विप्रतिपत्तेरवकाशः। यच्च नीतिशास्त्रज्ञानमन्तरापि केषाञ्चिद् सदाचारे प्रवृत्तिदर्शनात् केषाञ्चिच्च तज्ज्ञानेऽपि विपरीताचारे प्रवृत्त्युपलम्भान्नीतिशास्त्रस्य वैयर्थ्यमाशङ्कितम्; सर्वत्रापि तादृशापवादसम्भवात् सर्वशास्त्रवैयर्थ्यापत्तेश्च तन्न समीचीनम्।

नीतिशास्त्रस्याध्ययनं नैतिकादर्शधारणे बुद्धिमुद्बोधयति, विवेकमुद्घाटयति, प्रज्ञां विशदीकरोति। तत्प्रकाशेन यथार्थे नैतिकादर्शे स्फुटीभूते विलीयन्ते भ्रान्ता आदर्शाः, निलीयन्ते विरोधाभासाः, भज्यन्ते च भ्रान्ता भावनाः। अत एव नीतिशास्त्रस्य सैद्धान्तिकं विवेचनमेव व्यवहारे नैतिकीं मर्यादां प्रभावयति। तेन नीतिशास्त्रस्याध्ययनं परोक्षरूपेण समाजस्थितिम्, राजनीतिम्, अर्थशासनम्, शिक्षाम्, किं बहुना सर्वमेव तत्र प्रभावयति। ततश्च नीतिशास्त्रं सर्वतन्त्रोपयोगित्वात् सर्वजनोपयोगित्वाच्च नितान्तमुपादेयं सर्वैरध्येयं च। विशेषतो धर्मपरायणानां राष्ट्रनिर्माणतत्पराणां च कृते मानवाचारादर्शस्य व्यवस्थापकत्वाद् तद्विषये बुद्धिवैशद्यसम्पादकत्वादत्यन्तमेवोपादेयम्॥



# द्वितीयः परिच्छेदः

## नीतिशास्त्रस्य शास्त्रान्तरैः सह सम्बन्धः

सर्वस्यापि जगतो निर्माता एक एव परमेश्वर इति तज्जन्यत्वेन तज्ज्ञानविषयत्वेन च विश्वस्य सर्वेऽपि पदार्थाः परस्परं सम्बद्धा एव। यथा शरीराङ्गेषु सर्वेषामप्यङ्गानामस्त्येव परस्परं सम्बन्धः, एवं यथा 'पिण्डे तथा ब्रह्माण्डे' इति न्यायात् ब्रह्माण्डान्तर्गतानां सर्वेषामपि पदार्थानां परस्परसम्बन्धोऽभ्युपगन्तव्य एव, तद्वदेव च शास्त्राणां ज्ञानानां सर्वेषां परस्परं सम्बन्धो भवत्येव। शास्त्रान्तरसम्पर्कमन्तरेण न कस्याप्येकस्य शास्त्रस्यैवाध्ययनेन तस्यापि यथार्थं परिपूर्णं च ज्ञानं सम्भवति। यथा व्याकरणशास्त्रस्याध्ययनं प्रायशः स्वतन्त्र-विषयरूपेणैव क्रियते, परं "रक्षोहागमलघ्वसन्देहाः प्रयोजनम्। रक्षार्थं वेदानामध्येयं व्याकरणम्" इति च वदता भाष्यकारेण वेदसम्बन्धोऽस्य निरूपितः। शक्तिवादादिविषये च प्रौढिसम्पादनाय न्यायमीमांसादिशास्त्रान्तरैः सम्बन्धोऽस्यापरिहार्य एव। एवं नीति-शास्त्रस्यापि शास्त्रान्तरैः सह सम्बन्धोऽपरिहार्य एव। आधुनिके विशेषीकरणप्रधाने काले सर्वेषामपि शास्त्राणां विशेषीकरणमपेक्ष्यते। तदर्थं प्रत्येकस्मिन् विषये भूयान् साहित्य-विस्तरः प्रत्यहं प्रवर्धते, येन तत्तच्छास्त्रं स्वतन्त्रं शास्त्रान्तरमेव प्रतिभाति, तथापि तेषा-मन्योन्यसम्बन्धोऽनपह्नवनीय एव। तस्मान्नीतिशास्त्रस्यापि शास्त्रान्तरैः सह साक्षात् परम्परया वा सम्बन्धोऽस्त्येव।

आचारस्य आदर्शव्यवस्थापकं शास्त्रं नीतिशास्त्रमिति तस्य धर्मशास्त्रेणाध्यात्मविद्यया दर्शनेन मनोविज्ञानेन च घनिष्ठः सम्बन्धः। आत्मनो नित्यत्वम्, ईश्वरस्य सत्ता, कर्मस्वातन्त्र्यं चेति नीतिशास्त्रस्वीकृता आधारभूताः सिद्धान्ताः। तांस्तु विना न पदमात्रमपि प्रचलितुं शक्नोति नीतिशास्त्रम्। नीतिशास्त्रेण परममङ्गलमयो निःश्रेयसरूपो यो जीवनादर्शः स्थिरीक्रियते, तस्यैकेन जन्मनावाप्तिर्न सम्भाव्यते। तत्सिद्ध्यर्थं बहूनि जन्मान्यपेक्ष्यन्ते। यदि मरणसमकालमेवात्मनो विनाशश्चार्वाकादिवत् स्वीक्रियेत, तर्हि नीतिशास्त्रस्य चर्चैव व्यर्था। न स नीतिशास्त्राभिमत आदर्शः। परिमितेनानेन एकेन जन्मना पूर्णतामधिगच्छति, मृत्योर्व्यवधानाच्च नाग्रिमः कश्चन प्रयत्नः सम्भवतीति नीतिशास्त्रादर्शः परिकल्पनामात्रमेव स्यात्। तस्मान्निःश्रेयसरूपस्य परममङ्गलमयापरिमेयस्यादर्शस्य सम्पादनायानियतावधिकं नित्यमात्मतत्त्वं स्वीकार्यमेवेति नीतिशास्त्रे आत्मनो नित्यत्वमपरिहार्यम्। किञ्च, नीति-शास्त्रे परममङ्गलमयो निःश्रेयसरूपो य आदर्शः स्थाप्यते, तस्य क्वचित् सिद्धिरपि परिकल्प्यैव। किञ्चित् तादृशं तत्त्वं स्वीकार्यमेव, यत्रायमादर्शः परिपूर्णतामधिगतो भवेत्। इतरथायमा-दर्शः परिकल्पनामात्रमेव स्यात्। तस्मात् परिपूर्णादर्शभूतो परममङ्गलमय ईश्वरोऽपि नीतिशास्त्रे स्वीक्रियत एव। तदेवं परमानन्दमयो नित्य ईश्वरः, नित्यो जीवात्मा, परम-मङ्गलमयं निःश्रेयसपदवाच्यं जीवनोद्देश्यम्, तदधिगमाय चाविच्छेदेन प्रवर्तमानो जन्मसन्तान इत्येतद्दार्शनिकमाध्यात्मिकं वा तत्त्वजातमुपजीव्यैव प्रवर्तते नीतिशास्त्रमिति। डेकार्ट-लक-पैलेप्रभृतयः पाश्चात्त्या अपि नीतिशास्त्रविदो विद्वांसो धर्ममेव नीतिशास्त्रस्य मूलमाहुः।

काण्टमहोदयस्तु नीतिरपरिहार्यत्वेन धर्मं नयतीति नीतिमूलकत्वं धर्मस्य प्रतिपादयति। परमनिःश्रेयसरूपे जीवनादर्शे श्रेयोरूपस्योच्चतमचरित्रस्य उच्चतमसुखस्य च समावेशो भवति। लोके धर्मानुष्ठानपरायणानामपि दुःखदर्शनाद् धर्मस्य सुखेन सह न नित्यः सम्बन्धः, अपि तु कृतकः। धर्मानुष्ठानं तु पुरुषतन्त्रम्। सुखप्राप्तिश्च न पुरुषतन्त्रा, तत्प्रयोजकस्तु कश्चिद्-पर एव। स एव विश्वनियन्ता परेश्वरो धर्मेण सुखं योजयति। मार्टिन्यूमहोदयोऽप्यस्यैव सिद्धान्तस्य समर्थकः। तदनुसारं च नैतिकी बाध्यतैवेश्वरमुपलक्षयति। सर्वोऽपि संवेदनशीलो जनः स्वकर्तव्यानुष्ठाने नैतिकीं बाध्यतामनुभवति। सा च नैतिकी बाध्यता न स्वकल्पिता, तथात्वे स्वस्यैव तदुच्छेदकत्वप्रसङ्गः। नापि समाजकृता राज्यकृता वा, तस्य व्यक्त्यभिप्रायानभिज्ञत्वात्। ततश्चेश्वर एवास्या नैतिकबाध्यतायाः प्रयोजक इति भवति नीतिर्धर्ममूलम्।

तदेवं नीतिर्धर्ममूलं धर्मो वा नीतिमूलमित्युभयविधमपि दृश्यते विदुषामभिमतम्। वस्तुतस्तु धर्म एव नीतेरादर्शः, नीतिश्च धर्मस्य बाह्यप्रकाशनरूपेत्युभावप्यन्योन्याश्रयौ, अभिन्नौ वा। धर्मस्य हि ज्ञानकर्मात्मकत्वं प्रसिद्धम्, वेदानामपि ज्ञानकाण्ड-कर्मकाण्डात्मकम् अस्त्यंशद्वयम्। तत्र ज्ञानकाण्डात्मको भागोऽध्यात्मविद्या( मैटाफिज़िक्स )रूपः, कर्मकाण्डात्मके भागे च किञ्चिदीश्वरसम्बद्धम्, ईश्वरं प्रति वा विधेयं कर्म, किञ्चिच्च मानवव्यष्टिसमष्टिसम्बद्धम्। तत्राद्यं धर्मपदवाच्यम्, उत्तरं च नीतिपदवाच्यमिति नीतिधर्मयोर्व्यवच्छेदकं केचिदामनन्ति। परमार्थतस्तूभयविधमपि कर्मजातं धर्माङ्गभूतमेवेति न नीतिशास्त्रं धर्मशास्त्राद् व्यतिरिच्यते। तथापि नीतिशास्त्रं मानवाचारव्यतिरिक्तान् धर्मशास्त्रदर्शनशास्त्रयोर्विषयान् सिद्धवदभ्युपगच्छति, न तु विवेचयति; मानवाचारविषयं च सविस्तरं विवेचयतीति प्रक्रियाभेदेन ततो भिद्यते नीतिशास्त्रम्। तदेवं नीतिशास्त्रस्य धर्मशास्त्रेण दर्शनशास्त्रेणाध्यात्मविद्यात्मकेन च सह सम्बन्धोऽयं सकृत् प्रयत्नेनैव व्याख्यातः।

## मनोविज्ञानेन नीतिशास्त्रस्य सम्बन्धः

मनोधर्मस्य संकल्पस्य कर्मतया परिणतिरेवाचार इत्याचारादर्शव्यवस्थापकस्य नीतिशास्त्रस्य मनोविज्ञानेन सह सुतरां घनिष्ठः सम्बन्धः। संकल्पस्वरूपस्य विश्लेषणम्, कर्ममूलभूतानां भावनाभिप्रायप्रयोजनादीनां विवेचनम्, बुद्धिसंकल्पयोः सम्बन्धावधारणम्, इच्छास्वातन्त्र्यनिरूपणमित्येवमादयो मनोविज्ञानस्य विषयभूताः सिद्धान्ता नीतिशास्त्रेऽवश्यमपेक्षणीया इति मनोविज्ञानशास्त्रं नीतिशास्त्रस्याधारभूतम्। मनोविज्ञानस्य दोषपूर्णमध्ययनं दोषपूर्णां नीतिमुपजनयति, अदुष्टं च मनोविज्ञानाध्ययनमेव नीतिशास्त्रस्याऽप्यदोषत्वे प्रयोजकमित्यनयोर्घनिष्टोऽपरिहार्यश्च सम्बन्धः। तथापि नानयोरमेद ऐक्यं वा सम्भवति, तद्भेदकानामपि धर्माणां विद्यमानत्वात्। अधोऽङ्किताश्च नीतशास्त्रमनोविज्ञानशास्त्रयोर्भेदका धर्माः परिगण्यन्ते।

मनोद्वारेणैवानुभवाः संकल्पाश्च भवन्तीति मनोविज्ञानं संकल्पात्मकमनुभवात्मकमुभयविधमपि मानसव्यापारं विवेचयति। नीतिशास्त्रस्य चाचारमात्रेणैव सम्बन्ध इति तत्संकल्पात्मकव्यापारमात्रं ( विल ) विवेचयति, नानुभवात्मकमनुभवप्रयोजकं व्यापारमिति नीतिशास्त्रान्मनोविज्ञानस्य भिन्नो व्यापकश्च विषयः। ततोऽस्मिन् विषये बहुदेश-

व्यापकत्वात् परं मनोविज्ञानमल्पदेशव्यापकत्वाच्चापरं नीतिशास्त्रमिति प्रथमोऽनयोर्भेदहेतुः।

यद्यपि नीतिशास्त्रं मनोविज्ञानं चोभावपि संकल्पात्मकं मानसं व्यापारं विवेचयतः, तथापि नात्राप्यनयोरैक्यम्। विभिन्ना हि तयोर्विवेचनशैली। मनोविज्ञानं वास्तविकस्य स्वलक्षणरूपस्य, नीतिशास्त्रं चादर्शरूपस्य विवेचकमिति भिन्नस्तयोः पन्थाः। तथा च स्टाउटमहोदयोऽपि (मनोविज्ञान १६१०, पृष्ठ २) भेदमनयोर्निरूपयति। मनोविज्ञानं हि सङ्कल्पस्याध्ययने सदसत्त्वाधारकं तत्त्वं न स्पृशति। विधायक(पाज़िटिव)विज्ञानरूपत्वान्मनोविज्ञानं सर्वासामपि मानसिकप्रक्रियाणां विवेचनमध्ययनं च करोति। आदर्श-(नारमेटिव)विज्ञानरूपत्वाच्च नीतिशास्त्रं वस्तुवृत्तं विहाय आदर्शरूपमेव विवेचयति। तदेवमनयोर्भेदकस्य धर्मस्य विद्यमानत्वाद् ये सुखवादिनो नीतिशास्त्रं मनोविज्ञानस्य शाखामामनन्ति, न ते न्यायेन सङ्गच्छन्ते।

## नीतिशास्त्रसमाजविज्ञानयोः सम्बन्धः

मानवो हि सामाजिको जीवः। समाजमन्तरा चिरं नोत्सहते स्थातुमेकाकितया। ततश्च समाजादेव लभते नैतिकं मानसिकं च विकासम्। मानवसमष्टिरूपश्च समाजोऽपि तदन्तःपातिनां व्यष्टीनां चरित्रेण प्रभावितो भवतीति मानवसमाजावन्योन्योपकारकावितरेतराश्रितौ च। न मानवमन्तरा समाजसृष्टिर्न च समाजमन्तरा विकास इत्युभयोरपि परस्परसाकाङ्क्षत्वेनाभिसम्बन्धः। ततश्च व्यष्टिभूतानां मानवानामाचारादर्शव्यवस्थापकं नीतिशास्त्रं समाजशास्त्रस्याङ्गभूतमेवेति केचिद् विकासात्मकसुखवादिनः पाश्चात्त्या विद्वांसः। वस्तुतस्तु समाजविज्ञानं समाजस्य रचनाया उत्पत्तेर्विकासस्य च विज्ञानम्। आदिकालादारभ्य यया दिशा येन स्वरूपेण च समाजस्य प्रगतिर्जाता, तत्सर्वमानुपूर्व्येण विवेचयति समाजशास्त्रम्। तस्य तद्विवेचनं च प्रधानतो वस्तुवृत्तापेक्षम्, नादर्शापेक्षम्। नीतिशास्त्रं तु न वस्तुवृत्तमपेक्षते, न वेतिवृत्तात्मकं विकासक्रमादिकम्। वस्तुवृत्तापेक्षा तु शुद्धविज्ञान(पाज़िटिव साइंस)स्वरूपे समाजशास्त्रादावेवोपयुज्यते। नीतिशास्त्रं त्वादर्शविज्ञान(नार्मेटिव साइन्स)रूपं विद्यते। तत आदर्शमात्रं विवेचयति, न वस्तुवृत्तम्। तस्मात् समाजविज्ञानाद् भिन्नं नीतिशास्त्रम्।

किञ्च, सैद्धान्तिक(थ्योरिटिकल)मीमांसामात्रं समाजविज्ञानमकिञ्चित्करं व्यवहारे। नीतिशास्त्रन्तु आदर्शव्यवस्थापनमुखेन व्यक्तेश्चरित्रं सामाजिकीं स्थितिं च प्रभावयति। समाजविज्ञानं सामाजिकवर्गविशेषसम्बद्धं वस्तुवृत्तं सामूहिकमनसश्च व्यापारावेशादिकं विवेचयति, नीतिशास्त्रं च व्यष्टिप्रधानत्वाद् व्यष्टिभूतान् मनोव्यापारान् विवेचयति। समाजविज्ञानं विषयात्मकं बहिर्मुखं मानसिकं (आब्जैक्टिव मैन्टल साइन्स) व्यापारात्मकम्, नीतिशास्त्रं च (सब्जैक्टिव) आध्यात्मिकं मानसिकं विज्ञानमित्यनयोर्विभक्तः पन्थाः।

## नीतिशास्त्रराजशास्त्रयोः सम्बन्धः

प्रशासनस्य व्यवस्थापकं शास्त्रं राजशास्त्रमित्युच्यते। तद्धि प्रशासनस्य रचनाविधिं कार्यपद्धतिं च निर्धारयति, लोकोपयोगितया च मानवव्यवहारं नियमयति। प्रशासनं

सर्वजनहिताय तदन्तर्वर्तिभिर्जनैः स्वत एव निर्मितं तन्त्रम्। तच्च जनरक्षणाय, जनधन-रक्षणाय जनसुखरक्षणाय च नियमादिकं निर्माति, तेषां परिपालनं च कारयति। कामपि राज्यव्यवस्थामन्तरा समाजस्य तदन्तःपातिनां च जनानां क्वापि निवासादिकं न सम्भवति। ततश्च नैतिकानामादर्शानामवधारणं तदनुकूलं च जीवनयापनादिकं कस्यचिद् राजतन्त्रस्य छायायामेव सम्भवति, नान्यथेति राजशास्त्रनीतिशास्त्रयोरपि घनिष्ठः सम्बन्धः। अत एव प्लेटोमहोदयेन स्वीये 'रिपब्लिका'ख्ये ग्रन्थे उभयोरेकत्रैव समावेशः कृतः। अरिस्टाटिलमहोदयेन च राजनीतिविज्ञानस्य परिशिष्टरूपेण नीतिशास्त्रस्य (निकोमेथियन एथिक्स) निर्मितिर्व्यधायि। भारतेऽपि क्वचिद् विदुरनीत्यादावुभयोरेकत्रैव समावेशः, क्वचिच्च चाणक्यनीत्यादौ नीतिशास्त्रव्यतिरिक्तत्वेन राजशास्त्रव्यवस्थितिरित्यु-भयथा व्यवहारोऽनयोः सम्बन्धविशेषं परिदीपयति। राजशास्त्रनीतिशास्त्रयोर्व्यतिरेकव्यवस्थया राजशास्त्रे सत्यभाषणादीनां नैतिकादर्शानामपि व्यतिरेक इति क्वचित् परिकल्पितम्। तन्न समीचीनम्; राजशास्त्रव्यवस्थाया नीतिशास्त्रानुकूल्ये शतगुणो भवति प्रभावः। अत एव—"धर्मेण राज्यं विन्देत धर्मेण परिपालयेत्" (विदुरनीतौ) इत्यादीनि नीति-वचनानि सङ्गच्छन्ते।

तदेवं सिद्धेऽपि राजशास्त्रस्य नीतिशास्त्रेण सहापरिहार्ये सम्बन्धे न तयोरैक्यमभेदो वा, भेदप्रयोजकहेतूनां विद्यमानत्वात्। तत्रेमे मुख्या भेदहेतवः—

नीतिशास्त्रं नैतिकदृष्ट्या मानवाचाराणां मूल्याङ्कनं करोति, राजशास्त्रं च लोकोपयोग-दृष्ट्येति भिन्न एवानयोर्मापदण्डः। व्यक्तेर्नैतिक उत्कर्षो नीतिशास्त्रस्य साध्यभूतः, जनहितं च राजशास्त्रस्य साध्यम्। नीतिशास्त्रं धर्ममुखेन राजशास्त्रं च उपयोगिता( यूटीलिटी )-मुखेन सदसतोर्विवेचनं करोतीति स्फुट एवानयोर्भेदः।

किञ्च, राजनियमानां दण्डभयेन परिपालनं भवति, नैतिकनियमानां तु स्वेच्छया। वैदिकादेशानामपि प्रभुशब्दसम्मितत्वम्, काव्यप्रतिपादितानां धर्मोपदेशानां च कान्ताशब्द-सम्मितत्वं काव्यप्रकाशादौ प्रतिपादितम्; तदत्र नीतिशास्त्रप्रसङ्गेऽपि तुल्यम्। यदा त एव उपदेशा वैदिकविधिनिषेधवाक्यैर्गृह्यन्ते, तदा राजादेशवदपरिहार्या भवन्तीति दण्ड-भयेनैव तत्र प्रवृत्तिः। नीतिशास्त्रमुखेन च तदेव कर्तव्यं कान्तावत् स्वेच्छावृतया नैतिक-बाध्यतया सरसतापादनेन सुखमनुष्ठीयत इति नीतिशास्त्रराजशास्त्रयोरपरो भेदः।

किञ्च, राजशास्त्रं बाह्यविश्वविषयकं विज्ञानं नीतिशास्त्रं चान्तःसृष्टिविषयकं विज्ञानम्। राजशास्त्रं जनहितदृष्ट्या मनुष्यस्य बाह्याचारं तस्य परिणामेन विवेचयति। क्वचिच्च सदसत्त्वावधारणेऽभिप्रायमपि हेतुतयाङ्गीकरोति। नीतिशास्त्रं ततोऽपि सूक्ष्मतरं प्रवर्तना-त्मकं ( मोटिव )तत्त्वमपि प्रमाणीकरोति। राजनीतिशास्त्रं समाजशास्त्रवत् समष्टिचेतसा सम्बद्धम्, नीतिशास्त्रं च व्यष्टिचेतोऽनुविद्धं भवति। राजशास्त्रं जनहितसम्पादकम्, नीतिशास्त्रं मुख्यतो व्यष्टेरुत्कर्षाधायकम्। तस्माद् राजशास्त्रं नीतिशास्त्रतो भिन्नं तत्सम्बद्धं चेति सिद्धान्तः।

मैकियामेली-प्रभृतीनां पाश्चात्त्यविदुषां मतेन राजशास्त्रनीतिशास्त्रयोर्न कश्चित् सम्बन्धः।

राजाज्ञैव नियमः। न च राजा नीतिशास्त्रानुशास्यः, तस्य सर्वतन्त्रस्वतन्त्रत्वात्। तदेतन्मतं न समीचीनम्; न केवलं प्रजातन्त्रव्यवस्थायाम्, अपि तु राजतन्त्रात्मिकायामपि व्यवस्थायां परमार्थतो लोकेच्छैव व्यवस्थापिका। राजा च निर्वाचितराष्ट्रपतिवद् राष्ट्रेच्छायाः प्रतिबिम्बभूतः, वैपरीत्ये तु कंसादिवत्तदुच्छेददर्शनात्। तस्माद् नीतिशास्त्रानुसारिणी राजाज्ञैव साधारणतः प्रमाणम्, विपरीता त्वपवादरूपैव। तस्मान्नीतिशास्त्रस्य राजशास्त्रेण सह न कश्चिदपि सम्बन्ध इति वचनं साहसमात्रमेव।

हाब्स-वेन-प्रभृतीनामपरेषां पाश्चात्त्यविदुषां मतेन नीतिशास्त्रं राजशास्त्रस्य शाखामात्रम्। तदपि न समीचीनम्; दण्डभयपरिपालनीयराजनियमापेक्षया स्वेच्छापरिपालनीयनैतिकनियमभेदस्य सर्वजनप्रसिद्धत्वेनानपह्नवनीयत्वात्। येऽपि प्लेटो-अरिस्टाटिल-स्पिनोज़ा-हेगलप्रभृतयो राजशास्त्रं नीतिशास्त्रस्य शाखामात्रमामनन्ति, तेऽपि राजनियम-नैतिकनियमयोः सर्वजनप्रसिद्धं भेदमुपेक्ष्यैव वदन्तीति न श्रद्धेयवचनाः। तस्माद् राजशास्त्रं नीतिशास्त्रतो भिन्नं तत्सम्बद्धं चेति परमार्थः।

## नीतिशास्त्रार्थशास्त्रयोः सम्बन्धः

मानवस्यावश्यकतानां पूर्तिसाधनं शास्त्रम् 'अर्थशास्त्रम्' इत्युच्यते। तदपि इतरशास्त्रवन्नीतिशास्त्रतो भिन्नं तत्सम्बद्धं च। सम्पत्तेर्विज्ञानमर्थशास्त्रस्य विषयः। परं सम्पत्तिर्न स्वसाध्यभूता, सा तु मानवहितस्य साधनभूतैव। सम्पत्तेरुत्पादनं वितरणं भोगश्च तथा व्यवस्थितरूपेण विधेयः, येन मानवजातेरधिकतमहितसाधनं भवेत्। एष एव अर्थशास्त्रस्य नैतिकः पक्षः। आर्थिकहितानां मूल्यं तेषां नैतिकमूल्येनैवावधारणीयम्। भोजनवस्त्रभवनादीनां जनहितसाधनत्वेन व्यक्तिविकासहेतुत्वेन च उपयोगिता, न तु स्वतः पुरुषार्थत्वम्। अत एव रस्किन-कार्लाइल-प्रभृतयो विद्वांसो नीतिशास्त्रार्थशास्त्रयोर्घनिष्ठसम्पर्कमेव प्रतिपादयन्ति। नव्या अर्थशास्त्रिणश्च सम्पत्तिविज्ञानरूपापेक्षया जनकल्याणविज्ञानरूपतामेव, अर्थशास्त्रस्य समर्थयन्ति। तदेवं नीतिशास्त्रस्य अर्थशास्त्रानुकूल्येऽपि भेद एव।

## नीतिशास्त्रस्य भौतिकविज्ञानेन जीवविज्ञानेन च सम्बन्धः

मानवः पृथिव्यादिपाञ्चभौतिकैः पदार्थैः सजातीयैर्विजातीयैश्च जीवैः सर्वतः परिवृतोऽस्ति। भौतिकानां पदार्थानां स्वरूपादिविवेचकानि भौतिकानि शास्त्राणि। तद्बलेन च भौतिकनियमानां परिज्ञानाद् नैतिकजीवने भूयानुपकारो भवति। जलस्थलाकाशादिषु क्वापि भयं न भवतीति भौतिकविज्ञानानामपि नीतिशास्त्रेण सह सम्बन्धोऽस्त्येव। एवं जीवविज्ञानेनापि जीवरूपस्य मानवस्योपकारो भवत्येव, ततस्तेनापि सम्बन्धोऽस्ति। परमेतानि विधायकानि शुद्ध( पाज़िटिव )विज्ञानरूपाणि, नीतिशास्त्रं त्वादर्श( नारमेटिव )-विज्ञानरूपमिति तेषां भेदः स्पष्ट एव॥



# तृतीयः परिच्छेदः

## नीतिशास्त्रस्य मनोवैज्ञानिक आधारः

सङ्कल्पात्मकस्य मनोव्यापारस्य बाह्याभिव्यक्तिरेवाचारः। आचारस्यादर्शानुसन्धायकं शास्त्रं नीतिशास्त्रमिति पूर्वं व्युत्पादितम्। ततश्च मनोविज्ञाने नीतिशास्त्रस्य यदाधारभूतं तत्त्वं तद्विवेचनमावश्यकमपरिहार्यं च। तत्राचारस्य स्वरूपभेदो निमित्तभेदः प्रयोजनभेदो बाह्यपरिस्थितिभेदश्चेति चत्वारो मनोवैज्ञानिका नीतिशास्त्रस्याधाराः। १. तत्राचारस्य स्वरूपभेदे नैतिकं नीतिशून्यं ऐच्छिकमनैच्छिकं च चतुर्विधं कर्म। २. निमित्तभेदे च इच्छा कामना सङ्कल्पोऽभिलाष उत्कण्ठादिरूपा विविधा इच्छाभेदाः संगृहीता भवन्ति। तेषां परिज्ञानमन्तरा नैतिकादर्शस्यानुसन्धानं दुष्करमेवेति तत्परिज्ञानार्थमेष प्रयत्नः।

### नैतिकं नीतिशून्यं च कर्म

तत्र सर्वेषां कर्मणां नैतिकं मूल्यं न भवति। केषाञ्चित् कर्मणां नैतिकं मूल्यं भवति, कानिचिच्च कर्माणि नैतिकमूल्यशून्यान्यपि भवन्ति। अत्र नैतिकपदेन सदसदुभयरूपं कर्म गृह्यते। नीतिशून्यकर्मेति पदेन च सदसत्त्वोभयधर्मविहीनं कर्म। बुद्धिपूर्वं कृतं कर्म एव सद् असद् वा कर्म भवति। तदेव च नीतिशास्त्रे विवेचनीयत्वमुपैति। नाबुद्धिपूर्वं कृतमुन्मत्तादिकर्म पश्वादिकर्म वा नीतिशास्त्रे विवेचनीयं भवति, निर्जीवपदार्थनिष्ठानां स्पन्दात्मकानां व्यापाराणां प्राकृतिकीनां भूकम्पजलप्लावनादिघटनानां तु कथैव का। पशुकर्माणि बुद्धिपूर्वकं न क्रियन्त इति तानि नीतिशून्यानि कर्माणि जेगीयन्ते। एवं बालानामुन्मत्तानां च कर्माण्यपि न बुद्धिपूर्वकाणीति नीतिशून्यान्येव भवन्ति। यानि कर्माणि बलप्रयोगेण कार्यन्ते, कर्ता चाततायिनो बलप्रयोगं प्रतिरोद्धुमक्षमत्वाद् विवशो भूत्वा करोति, तान्यपि नीतिशून्यान्येव कर्माणि। एवं चौषधादिप्रयोगेण सम्मोहनविद्या( हिप्नाटिक सजेशन्स )-प्रयोगेण वाऽभिभूतविवेको यत्कर्मानुतिष्ठति, तदपि बुद्धिपूर्वं न क्रियत इति तदपि नीतिशून्यकर्मवर्ग एवापतति। एवं भावनाग्रन्थीनां ( कम्प्लैक्स ) प्रभावेण क्रियमाणानि बाध्यतामूलकानि कर्माण्यपि नीतिशून्यानि कर्माणि भवन्ति। किं बहुना, प्रकृतिस्थानां विवेकिनां वयस्कानामप्यनैच्छिकानि कर्माणि नीतिशून्यान्येव स्वीक्रियन्ते।

केवलं विवेकिनां प्रकृतिस्थानामैच्छिकमभ्यासजन्यं च कर्म नैतिकनिर्णयार्हं भवति। तत्रैच्छिकं कर्म विवेकवता प्रकृतिस्थेन कर्त्रा बुद्धिपूर्वं स्वेच्छया क्रियत इति नैतिकनिर्णय-मपेक्षते। अभ्यासजन्यं च कर्म यद्यपि स्वयंचालितमिवाप्रतिरुद्धं कर्म भवति, तथापि स्वेच्छोपार्जितत्वादभ्यासस्य दृढतरसङ्कल्पबलेन तन्निरोधसम्भवाच्च तदभ्यासजन्यं कर्म नैतिकं निर्णयमर्हत्येव।

## ऐच्छिकमनैच्छिकं च कर्म

बुद्धिपूर्वं प्रयोजनेच्छाजनितं कर्म ऐच्छिकं कर्मेत्युच्यते। इच्छानिर्वर्त्यत्वादैच्छिकं नैतिकनिर्णयार्हं च तद् भवति, बुद्धिपूर्वकत्वात्। ततो भिन्नमनैच्छिकमपि भवति किञ्चित् कर्म। वैशेषिकदर्शने जीवनपूर्वक इच्छाद्वेषादिपूर्वकश्चेति द्विविधः प्रयत्नो व्याख्यातः। तत्र यो जीवनपूर्वको व्यापारः स एवात्र 'अनैच्छिककर्म' पदेन व्यवह्रियते। तत्र स्वयं चालितं कर्म, अनियतं कर्म, भावनाजन्यं कर्म, सहजातं कर्म, प्रत्यावर्तनकर्म चेति बहुविधमनैच्छिकं कर्म मनोविज्ञानशास्त्रे व्याख्यातम्। तदनतिप्रयोजकत्वाद् नात्रोदाह्रियते। जिज्ञासुभिस्तद्भेदा मनोविज्ञानशास्त्रग्रन्थेभ्योऽवगन्तव्याः।

## कर्मणां निमित्तभेदाः

यदैच्छिकं कर्म नीतिशास्त्रे विवेच्यं भवति तस्यापि मानसिकी, शारीरिकी, बाह्यपरिणामरूपा चेति त्रिविधा स्थितिः। न्यायादिमते तु कायिकं वाचिकं मानसं चेति त्रिविधं कर्म, "यन्मनसा मनुते तद् वाचा वदति, यद् वाचा वदति तत्कर्मणा करोति, यत्कर्मणा करोति तदभिसम्पद्यते" इत्यादिश्रुतेः। बाह्यपरिणामस्तु फलम्। तत्रैच्छिके कर्मणि इच्छैव प्रयोजिका। तस्मादिच्छैवाद्यं कर्मेति मीमांसकाः। तत्र कामोऽभिलाषो रागः सङ्कल्पः कारुण्यं वैराग्यं उपधाभाव इत्येवमादय इच्छाभेदाः प्रशस्तपादभाष्ये इच्छाप्रकरणे दर्शिताः। नव्यैराचार्यैश्च डिज़ायर-विश-विल-वाण्ट-प्रभृतिभिः शब्दैरनेकेच्छाभेदाः प्रदर्शिताः। सर्वे चैते भेदा मानसव्यापारविशेषरूपा एवेति कायिक-वाचिककर्मणां मूलभूताः।

मानसव्यापाराद् बहिर्भूतमिच्छादिप्रयोज्यं द्विविधं शारीरं कर्म—किञ्चित् सरलं किञ्चिच्च सङ्कीर्णं संघर्षजन्यम्। यत्र पूर्वं कर्तव्याकर्तव्यव्यामोहो भवति, ततश्च पूर्वापर-विचारोत्तरं तथ्यानुष्ठानं भवति, तत्संघर्षजं कर्म। उभयोरप्यनयोः कर्मणोरुत्पत्तिप्रक्रिया किञ्चिद्भिद्यते। तत्र पूर्वं सरलकर्मणः प्रक्रिया विचार्यते। सरलकर्मण उत्पत्तिः सामान्यत इच्छया भवति।

## इच्छा

तत्रेच्छा सर्वस्यापि कर्मणः प्रधानं निमित्तम्। सा च विषयभेदाद् व्यक्तिभेदाच्च बहुधा भिद्यते। कस्याप्यभावविशेषस्य भावनैव इच्छायाः प्रयोजिका। तदभावज्ञानवतोऽतृप्त-स्यात्मनो वर्तमानदशायाः परिकल्पिततदवाप्तिजन्यतृप्तिदशायाश्च अन्तरालवर्तिनी इच्छा। तत्र ज्ञानात्मकं भावात्मकं व्यवसायात्मकं चेति तत्त्वत्रयं समनुगतं भवति। तत्राभावानु-भवविषयस्य वस्तुविशेषस्य, तदवाप्तिप्रयोजकानामुचितानुचितसाधनानाम्, वस्तुभूताया वर्तमानापूर्णतादशाया आदर्शभूतायाश्च परिपूर्णतारूपाया भविष्यद्दशायाश्च तारतम्यम्, इत्येतत्सर्वमिच्छाया ज्ञानात्मकं तत्त्वम्। अपूर्णाया वर्तमानदशाया अभीष्टावाप्तौ परिपूर्ण-तयादर्शभूताया भविष्यद्दशायाश्च मध्ये यावद्वैषम्यं भवति, तावदेवेच्छाया प्राबल्यं भवति। अभावस्य कटुवेदना प्रत्याशिततृप्तिजन्यसुखभावना चेति द्वयमिच्छाया भावात्मकं तत्त्वम्।

अतृप्तिनिवर्तनक्षमस्य वस्तुनोऽभिलाषस्तदवाप्तिप्रयोजिका संरम्भिणी मनोवृत्तिश्चेति द्वयमिच्छाया व्यवसायात्मकं तत्त्वम् । तदेवमभावानुभूतिरेवेच्छायाः प्रवर्तिकेति नव्याः । दर्शनप्रतिसन्धानजन्या इच्छेति तु वात्स्यायनः । यज्जातीयस्यार्थस्य सन्निकर्षात् सुखमात्मोपलब्धवान् परिज्ञातवान् वा, तज्जातीयमेवार्थं पश्यन् मनसा भावयन् वा उपादातुमिच्छति । तत्र पूर्वोत्तरवर्तिनोर्दर्शनयोः प्रतिसन्धानमेवेच्छायाः प्रयोजकमिति वात्स्यायनाभिप्रायः । प्रशस्तपादस्तु 'स्वार्थं परार्थं वाऽप्राप्तप्रार्थना इच्छाती'च्छालक्षण-मुखेन नव्याभिमतामभावानुभूतिमेवेच्छायाः प्रयोजिकामाह । सुखाद्यपेक्षः स्मृत्यपेक्षो वा आत्ममनसोः संयोगश्चेच्छाया निमित्तं भवति । सा च प्रयत्नहेतुः स्मृतिहेतुर्धर्माधर्म-हेतुर्वा भवतीति प्रशस्तपादस्याभिप्रायः ।

## इच्छाभेदाः

स्थावराः पशवो मनुष्याश्च सर्वेऽप्यपूर्णकामा अभावग्रस्ताश्चाप्राप्तं प्रार्थयन्ते । ततश्चाप्राप्तप्रार्थनारूपेयमिच्छा सर्वत्राप्यविशिष्टा, तथापि तेषां मनोव्यापारे तारतम्या-दिच्छायास्तारतम्यं भवत्येव । स्थावरास्तरुगुल्मादयोऽभिभूतचैतन्याः सुषुप्तवन्मनोव्यापारशून्या अपि जीवजवृत्त्या पोषणाचोषणार्थं पाताले पादान् प्रसारयन्ति, प्राणप्रदस्य प्रकाशस्य परिग्रहणाय च नभसि शाखाविस्तारमातन्वन्ति । पादपानां प्रयासोऽयमनैच्छिको जीवनप्रयत्नपूर्वक एव ।

पशुपक्षिसरीसृपादयस्तिर्यञ्चो व्यक्तचैतन्याः, तेषां प्रवृत्तिरैच्छिकी । तथापि तत्र सदसद्विवेकबुद्धेरभावात् शुभाशुभविवेकशून्यैव प्रवृत्तिः । मानवानां विवेकशीलत्वात् तत्प्रवृत्तौ सदसद्विवेकोऽपि प्रतिभासते । तत्रापि बुद्धितारतम्याद् विवेकतारतम्यं भवति । 'विद्वांसो हि देवाः' इत्यादिस्मृतिपरिभाषितानां देवपदवाच्यानां विदुषां जनसाधारणा-पेक्षया सदसदवधारणे वैशिष्ट्यं नैसर्गिकम् । तदेवमिच्छानिष्ठविवेकतारतम्यमपेक्ष्य स्थावराणामिच्छा अभावाभिव्यञ्जकेन 'वाण्ट'-शब्देन, तिरश्चामिच्छा क्षुधार्थकेन 'एपी-टाइट'-शब्देन, मनुष्याणां चेच्छार्थकेन 'डिज़ायर'-शब्देन व्यवह्रियते नव्यैः ।

मानवेच्छायामपि बलाबलापेक्षो विविधः शब्दप्रयोगः । सामान्या इच्छा इच्छार्थकेन डिज़ायरशब्देन व्यवह्रियते । कर्तव्याकर्तव्यव्यामोहजनके सङ्कीर्णे च कार्ये इच्छानां संघर्षो भवति । घातप्रतिघातोत्तरं या इच्छा बलवत्तरा, सैव विजयते । सा च विजयिनी बलवत्तरेच्छा उत्कण्ठाभिव्यञ्जकेन 'विश'-शब्देन व्यवह्रियते । प्रबलेच्छैवोत्कण्ठा ( विश )-पदवाच्या भवति । तथाप्येतत् सम्भवति यद् विजयिनी प्रबलतरेच्छा कर्त्रे नाभिरोचेत । कर्तव्यभावनयैवापरिहार्यत्वेन अन्येन वा केनचिन्निमित्तेन बाध्यतयानुष्ठेयतामापद्येत सा । प्रबलेच्छा ( विश ) उत्कण्ठापदवाच्या भवति । यत्र च सङ्कीर्णे कर्मणि पूर्वापरसङ्घर्षोत्तरं विजयिनी इच्छा पुरुषस्य मनोवृत्त्यनुकूला तस्येच्छाक्षेत्रानुवर्तिनी च भवति, सा सङ्कल्प-( विल ) शब्दवाच्यतामधिगच्छति । एवं अभाव( वाण्ट )-क्षुधा( एपीटाइट )-इच्छा ( डिज़ायर )-उत्कण्ठा( विश )-सङ्कल्प( विल )-भेदादिच्छाभेदाः प्रदर्शिता नव्यैः । तदर्थं च विभिन्नशब्दानां प्रयोगो विहितः । तथापि तेषां शब्दानां प्रयोगो व्यवस्थिततया

न तन्मात्रगोचरः। सर्वेऽपि ते शब्दा इच्छासामान्यवाचकत्वेन सर्वत्र प्रयुज्यन्ते तत्साहित्ये। प्रशस्तपादाचार्येण च "अभ्यवहारेच्छाऽभिलाषः, मैथुनेच्छा कामः, पुनः पुनर्विषयानुरञ्जनेच्छा रागः, अनासन्नक्रियेच्छा सङ्कल्पः, स्वार्थमनपेक्ष्य परदुःखप्रहाणेच्छा कारुण्यम्, दोषदर्शनाद् विषयत्यागेच्छा वैराग्यम्, परवञ्चनेच्छा उपधा, अन्तर्निगूढेच्छा भावः" इत्यादयो विषयभेदादिच्छाभेदाः प्रदर्शिताः। आङ्गलभाषाया वाण्ट-एपीटाइट-डिज़ायर-विश-विल-प्रभृतिषु शब्देषु पारिभाषिके भेदेऽभिमतेऽप्यभिन्नतया तेषां प्रयोगो भवति। एवं संस्कृतशब्दानामपि पर्यायतया प्रयोगः।

## इच्छाक्षेत्रम्

"भिन्नरुचिर्हि लोकः" इति सुप्रसिद्धाऽभियुक्तोक्तिः। सर्वस्यापि जनस्याभिरुचिक्षेत्रं भिन्नं भवति। मेकेंज़ीमहोदयस्तदेवाभिरुचिक्षेत्रमिच्छाक्षेत्रतया व्यवहरति (नीतिशास्त्र पृ० २४)। तदभिरुचिक्षेत्रमिच्छाक्षेत्रं वा जनस्य चरित्राभिव्यञ्जकं भवति। तस्य इच्छाश्च सामान्यतोऽभिरुचिक्षेत्रसम्बद्धा एव भवन्ति, न तु स्वतन्त्राः। तदभिरुचिक्षेत्रं च सामान्यतः स्थिरप्रायमपि निमित्तविशेषात् परिवृत्तिमप्यधिगच्छति। तत्परिवृत्तौ चेच्छा अपि तदनुसारं परिवर्तन्त इतीच्छाक्षेत्रानुगामिन्य एवैच्छाः, न तु स्वतन्त्रा इत्यायातम्।

स्थावराणां पश्वादीनामभीष्टस्याभावस्य पूर्त्यर्थको व्यापारो वाण्ट-एपीटाइटप्रभृतिशब्दैर्व्यवह्रियते। इच्छार्थकश्च डिज़ायर-शब्दो मनुष्यस्यैव तादृशव्यवहारे प्रयुज्यत इति पश्वादिव्यावृत्तेर्मनुष्य एव भवतीच्छेति नव्यानामभिप्रायः। म्यूरहेड-महोदयस्तु वस्तुविषयकत्वमेवेच्छानां प्रतिपादयति। इच्छायाश्चात्मना द्विविधः सम्बन्धस्तदभिमतः। अभीष्टे वस्तुन्येव भवतीच्छा। वस्तुनोऽभीष्टत्वं च चरित्रमनुसरति। दार्शनिकेभ्यो दर्शनग्रन्थानामध्ययनं रुचिकरं कविभ्यश्च काव्यग्रन्थानामित्यत्राभ्यस्तसङ्कल्पात्मकं स्वभावापरपर्यायं चरित्रमेव प्रभवति। ततश्चाभीष्टं वस्तु चरित्रानुरूपं भवति, अपूर्णताविवर्तनेन पूर्णतामाधाय आदर्शं च व्यवस्थापयतीति द्विधा आत्मना सम्बद्धं भवति। अभीष्टप्राप्त्यर्था अप्राप्तप्रार्थनारूपेयमिच्छा इच्छापदवाच्या। अनिष्टनिवारणार्था तु वैशेषिकादौ द्वेषपदवाच्या भवति।

## इच्छासङ्करः

कर्तव्याकर्तव्यव्यामोहात्मके सङ्कीर्णे कर्मणि इच्छानां सङ्करः। तत्र दृष्टिभेदेन नैकानि वस्तून्यभीष्टानि। स्नेहानुबन्धेन बान्धवानां दुर्योधनादीनां पूज्यानां भीष्मादीनां चाभिरक्षणं धर्मसंस्थापनार्थाय, दुर्नीतिपरायणानां तेषां विनाशश्च पार्थाभिमतः। न च तदुभयमपि सह सम्पाद्यमिति भवति तत्रेच्छासङ्करः। केचिदत्र प्रयोजनसाङ्कर्यमप्यामनन्ति। परे तु प्रयोजनस्य स्वीकृतेच्छास्वरूपत्वेनेच्छासाङ्कर्यमेवेति प्राहुः। इच्छासाङ्कर्येऽपि न स्वतन्त्रशक्तिरूपा इच्छाः, आत्मगुणभूता एव ताः। ततश्च विरोधी योद्धा युद्धभूमिश्च सर्वमात्मैवेति ड्यूई महोदयः स्टाउटमहोदयश्च।

## विमर्शो निर्णयश्च

एवं समुपस्थिते सङ्कीर्णे कर्मणि कर्तव्याकर्तव्यसंशये आत्मा उभयोः पक्षयोस्तुलनात्मकं विवेचनं करोति, अन्यतरं चाभीष्टत्वेन अवधारयति। तदिदं विवेचनमवधारणं च

यथाक्रमं विमर्शनिर्णयपदवाच्यं भवति। तथा च "विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः" (१.१.४१) इति न्यायसूत्रम्। स चायं निर्णयः सङ्कल्पस्थले सन्देहपूर्वकः पक्षप्रतिपक्षविमर्शपूर्वकश्च भवति। अन्यत्र तु संशयविमर्शादिकं विनाऽपि सम्भवति। प्राङ्निर्णयात् सर्वपक्षसाधारणं सम्भावितं प्रवर्तकत्वं भवति। सति च निर्णये निर्णीतैवेच्छा प्रवृत्तिप्रयोजिका, अपरास्तु संस्काररूपतया आत्मन्येव निलीयन्ते।

## प्रयोजनं लक्ष्यं च ( मोटिव )

"येन प्रयुक्तः प्रवर्तते तत्प्रयोजनम्" इति वात्स्यायनोक्तदिशा प्रवृत्तिहेतुभूतं प्रयोजनं भवति। आद्या प्रवृत्तिरिच्छैवेति न्यायेन मानससंवेगरूपा प्रवृत्तिः, तद्धेतुभूतं तत्प्रयोजकं वा प्रयोजनम्। तत्र अभावानुभूतिरेव इच्छाजनिकेति पूर्वं प्रतिपादितम्। ततश्च यस्याभावस्य अनुभूतिरिच्छाजनिका, तदेव प्रयोजनम्। तदेव मानससंवेगात्मिकां प्रवृत्तिं जनयति। क्वचिच्च विषयविशेपनिबन्धना क्रोधाद्यात्मिका मानसी प्रवृत्तिरेव शारीरे कर्मणि प्रयोजिका। प्रयोजकत्वं च क्वचिद् बाध्यत्वेन, क्वचिच्च प्रेरणाजनकत्वमात्रेणेति द्विविधम्। ह्यूम-बेंथम-मिल-बेनप्रभृतयः सुखवादिनः ( हेडोनिस्ट्स ) सुखदुःखान्यतरभावनामेव कार्यमात्रे प्रयोजिकामामनन्ति। सर्वो हि जनः सुखप्राप्तये दुःखविघाताय च प्रयतते, न प्रयोजनान्तरेण। तस्मात् सर्वत्राप्यनयोरेव प्रवृत्तिप्रयोजकत्वम्। तथा च सुखदुःखाद्यतिरिक्ता न काचिदन्यप्रेरणेति बेंथमोक्तिः। ग्रीन-मेकेंजीप्रभृतयस्तु बुद्धिसम्पन्नत्वाद् विवेकशीलत्वाच्च मानवस्य लक्ष्यविचारमेव प्रयोजकं व्याहरन्ति। ऐच्छिके कर्मणि विमर्शो निर्णयः सङ्कल्पश्चापेक्षित इति लक्ष्यविचारस्यैव प्रयोजकत्वम्। म्यूरहेडमहोदयोऽपि स्वचरित्रानुकूलस्य निर्वाचितस्य विचारमेव प्रयोजकमङ्गीकरोति। एवं मेकेंजीप्रभृतयो लक्ष्यस्य विचारं म्यूरहेडमहोदयश्च निर्वाचितस्य लक्ष्यस्य विचारं प्रवर्तकत्वेन स्वीकरोति। तन्मते न कश्चन विशिष्टो भेदः।

## प्रयोजनं बुद्धिश्च ( मोटिव एण्ड रीजन )

तदेवं म्यूरहेड-मेकेंजीप्रभृतिभिः प्रयोजनप्रसङ्गे बुद्धेरपि समावेशो विहितः। कर्मणा हेतुभूताः प्रेरणाः सर्वात्मना विवेकयुक्ता विवेकहीना एव वा न भवन्ति। क्वचिद् क्रोधादिमनोवेगजनिताः, अत एव विवेकविधुराः, क्वचिच्च विचारमूलिका इति विवेकयुक्ता भवन्ति। तत्र विवेकयुक्ताः प्रेरणा बुद्धिमूलाः, तदितरास्तु क्रोधादिमनोवेगमात्रजन्याः। ततश्च क्वचिद् बुद्धिः प्रयोजनावधारणे हेतुः, क्वचिच्च मनोवेगविशेषास्तदवधारणहेतवः। ह्यूममहोदयस्तु मनोवेगात्मकत्वमेव प्रवृत्तीनां तन्मात्रावधार्यत्वं च लक्ष्यस्याभ्युपेत्य बुद्धेः ( रीजन ) लक्ष्योपयोगिसाधननिर्देशकत्वमात्रत्वमङ्गीकरोति, न तु लक्ष्यावधारणहेतुत्वम्। तन्न समीचीनम्; बुद्धेरपि लक्ष्यावधारणहेतुत्वसम्भवात्।

## प्रयोजनमभिप्रायश्च ( मोटिव एण्ड इन्टेन्शन )

बेंथम-मिलप्रभृतयोऽभिप्रायशब्दं ( इन्टेन्शन ) कर्मणः उद्देश्यभूतस्य लक्ष्यस्य बोधनार्थं प्रेरणाशब्दं ( मोटिव ) च कर्महेतुभूतस्य संवेगादेर्बोधनार्थं प्रयुङ्क्ते। बेंथममहोदयेन प्रयोजनाभिप्राययोर्भेदं प्रदर्शयता लिखितम्—"यदुद्दिश्य कार्यं क्रियते तत्प्रयोजनम्।" तदेवं

प्रयोजनांशे विध्यंशस्य ( परसुएसिव ) प्राधान्यम् । यत्प्राप्त्यर्थं निवृत्त्यर्थं वा कार्यं क्रियते, तदुभयमप्यभिप्रायान्तर्भूतम् । एवमभिप्राये प्रवर्तकनिवर्तकयोरुभयोरपि ( परसुएसिव, डिस्यूएसिव ) समावेशः, प्रयोजने तु केवलं प्रवर्तकस्यैवेति बेन्थमाभिमतः प्रयोजनाभिप्राययोर्भेदः। तस्मादभिप्रायो व्यापकः, प्रयोजनं च व्याप्यम्। शिष्यस्य ताडने दण्डप्रदानमभिप्रायः, हितसाधनं च प्रयोजम् । दण्डप्रदाने इष्टप्रवृत्तिरनिष्टनिवृत्तिरित्युभयमप्यभिप्रेतमित्यभिप्रायः। हितसाधने चानिष्टनिवृत्तेरभावाद् हितसाधनं प्रयोजनम् । ततश्च निर्वाचितस्योद्देश्यस्य तदुचितस्य निर्वाचितस्योपायस्य प्रत्याशितस्य फलस्य च विचारोऽभिप्राये समाविष्टो न तु प्रयोजने । तस्मात् प्रयोजनं व्याप्यम्, अभिप्रायश्च व्यापकः ।

## सुखं प्रयोजनं च

बेन्थम-मिलप्रभृतयो मनोवैज्ञानिकसुखवादिनः ( हेडोनिस्ट्स ) सुखप्राप्त्यर्थं दुःखनिवृत्त्यर्थं वा सर्वेषां जनानां प्रवृत्तिदर्शनात् सुखमेव प्रयोजनम्, न तु वस्त्वन्तरं किञ्चिदिति वदन्ति । तदन्ये मेकेंजीप्रभृतयो न क्षमन्ते । तेषां मतेऽनुभूयमानस्य कस्यचिद् भावस्य पूर्त्यर्थमेव इच्छायाः समुत्पत्तिः । तत्पूर्तिश्च सुखे परिणमति । सुखमिच्छापूर्तेः कस्यचिद्भावस्य परिणामः फलं वा, न तु प्रयोजनम् । अभावपूर्त्यर्थमिच्छायाः समुत्पत्तिरिति तत्पूर्तिरेव प्रयोजनम्, तत्पूर्तिजन्यं च फलं सुखमिति । क्वचित्तु सुखमपि प्रयोजनं भवति, यत्र तदुद्देश्येनैव इच्छा भवति । यथा कदाचिदास्वादविशेषलोभेन तृप्तोऽपि पुरुषो भोजनादौ प्रवर्तते, तत्र नाभावनिवृत्त्यर्था प्रवृत्तिः, अपि तु आस्वादरूपसुखविशेषप्रयोजनेनैवेति सुखमेवात्र प्रयोजनमिति ।

## प्राच्यमतम्

प्राच्यास्तु "यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम्" इति प्रयोजनलक्षणं न्यायसूत्रादौ, तद्भाष्ये च "यमर्थमाप्तव्यं हातव्यं वाऽध्यवसाय तदाप्तिहानोपायमनुतिष्ठति प्रयोजनं तद्वेदितव्यम्" इति संगिरन्ते । तदेवं प्रवृत्तिनिवृत्तिविषययोराप्तव्यहातव्ययोरुभयोरप्यर्थयोः प्रयोजनेऽन्तर्भावस्तदभिप्रेतः, न तु बेंथमादिवत् प्रयोजनाभिप्राययोर्व्याप्यव्यापकभावस्तेषामभिमतः । मेकेंजीप्रभृतिसम्मतः सुखप्रयोजनयोर्भेदस्तु तेषामप्यभिमतः । "प्रवृत्तिदोषजनितोऽर्थः फलम्" इति न्यायसूत्रस्य भाष्ये "सुखदुःखसंवेदनं फलम्" इति, "ससाधनं सुखदुःखोपभोगः फलम्" इति चान्यत्र प्रयोजनव्यतिरिक्तत्वेनैव फलस्य निर्देशात् ।

## अभ्यासः ( हैबिट )

कर्मणां बहुकृत्वः पुनः पुनरावृत्तिरेवाभ्यासस्य स्वभावस्य वा प्रयोजिका । भूयः पुनरावृत्त्या ऐच्छिकान्यपि कर्माणि यान्त्रिकाणीव स्वयंचालितानि सम्पद्यन्ते । न च संकल्पादिकं चेतोव्यापारमपेक्षन्ते । चेतोधिकारविमुक्तिः सुगमता, शीघ्रता, यथार्थता, समरूपता, अपरिवर्तनीयता चेत्येतान्यभ्यासस्य परिचायकानि लिङ्गानि । अभ्यासवशाच्चेतोऽधिकारविमुक्तं यन्त्रचालितमिव स्वतः सम्पद्यमानमपि कर्म नैतिकनिर्णयविषयतामापद्यत एव, न तु तदतिशेते । अभ्यासा बुद्धिपूर्वकमेवार्ज्यन्ते, प्रबलतरसङ्कल्पबलेन च बद्धमूला अप्यभ्यासाः

समूलकापं कषिता भवन्तीति चाभ्यासानां तेषां नैतिकनिर्णयार्हत्वमेव। अभ्यासे जनस्य चरित्रं प्रतिबिम्बितं भवति। चरित्रं च नैतिकनिर्णयस्य विषयभूतमेवेति नाभ्यासो नैतिकनिर्णयविषयतामतिक्रामति। चरित्राभिव्यक्तिस्वरूपे व्यवहारे ऐच्छिकं कर्म अभ्यासश्चेत्युभयमप्यन्तर्भूतमित्युभयमपि नैतिकनिर्णयविषयतामवगाहते।

## चरित्रमभ्यासः स्वभावो व्यवहारश्च
## ( करेक्टर, हैबिट, नेचर एण्ड कण्डक्ट )

कर्मणामभ्यावृत्तिरभ्यासः। संकल्पजन्योऽभ्यासः, अभ्यस्तश्च संकल्पश्चरित्रम्। पूर्णरूपेणाभ्यस्तो निर्मितो वा संकल्पश्चरित्रमिति नोविलिसमहोदयः। स्वभावस्य सहजत्वात् चरित्रस्य चार्जितत्वात् स्वभावाद् भिद्यते चरित्रम्। चरित्रव्यवहारयोश्च दृश्यादृश्यस्वरूपत्वेन भेदः। व्यवहारस्यादृश्यं रूपं चरित्रम्, चरित्रस्य दृश्यपक्षश्च व्यवहारः। सहजाः स्वाभाविक्यः प्रवृत्तय एव बुद्धया संकल्पेन च नियन्त्रिताः स्थायितामुपगम्य चरित्रीभवन्ति। तदेवं स्वाभाविक्यः प्रवृत्तयश्चरित्रस्योपादानम्। संकल्पश्च निमित्तम्, यद्बलेन स्वाभाविक्योऽपि प्रवृत्तयश्चरित्ररूपेण स्थायितां व्रजन्ति। तदेवं मानवस्य सहजाता प्रवृत्तिः स्वभावः। स्वभावस्यातिशयिताऽभ्यावृत्तिरभ्यासः। संकल्पजन्योऽभ्यासश्चरित्रम्। चरित्रस्य दृश्यपक्षश्च व्यवहार इत्येतेषां पारस्परिकः सम्बन्धः।

चरित्रस्य दृश्यपक्षो व्यवहारः, व्यवहारस्य चादृश्यपक्षश्चरित्रमित्यनयोः सम्बन्धेऽपि न केवलं पूर्वार्जितचरित्रमात्रेण व्यवहारः, तत्रेच्छास्वातन्त्र्यस्यापि प्रयोजकत्वात्। व्यवहारे इच्छास्वातन्त्र्यं भवत्यात्मनः। व्यवहाराः स्वतन्त्रेच्छाप्रयोज्या एव भवन्ति, तथापि तत्र पूर्वार्जितचरित्रस्य प्रभावो नियामको नापह्नवनीयश्च भवति। एवं चरित्रमपि नैकान्ततः सुस्थिरं भवति, तदपि व्यवहारेण विपरिवर्तते। एवं चरित्रेण व्यवहारो व्यवहारेण च चरित्रं प्रभावितं भवति।

## धर्मो ज्ञानमभ्यासश्च ( वर्च्यू, नॉलेज एण्ड हैबिट )

धर्मानुष्ठानं ज्ञानेनैव भवति, न ज्ञानमन्तरा। सामान्ये कर्मणि कर्तव्यज्ञानं संकीर्णे च कर्मणि नैतिकत्वतारतम्यज्ञानमपरिहार्यत्वेनापेक्षितं भवतीति ज्ञानमेव धर्म इति साक्रेटीजमहोदस्य पक्षः। धर्मानुष्ठानार्थं कर्तव्यज्ञानस्यापरिहार्यत्वेऽपि सदसद्विवेकशालिनोऽपि पुरुषाः प्राक्तनसंस्कारवशाद् दुर्बलत्वाच्च संकल्पस्यासत्कर्मपरायणा दृश्यन्ते इति कर्तव्यज्ञानव्यतिरिक्तं प्राक्तनापुण्यसंस्काराभिभवक्षमं संकल्पबलाधाननिमित्तं च किञ्चिदन्यदप्यपेक्ष्यते बलवन्निमित्तान्तरं धर्मानुष्ठानप्रवर्तकम्। तच्च निमित्तान्तरमभ्यास एव। अभ्यासवान् पुरुषः समुपस्थितेऽपि सङ्करे धर्ममेवानुतिष्ठति, नाधर्ममिति धर्मानुष्ठाने प्रधानतयाऽभ्यास एव प्रयोजक इति अरिस्टाटिलमहोदयस्य पक्षः। यस्तु धर्मानुष्ठाने आनन्दं नानुभवति, नासौ धार्मिकः पुरुषः। धर्मानुष्ठानं यस्यानन्दाय सम्पद्यते, स एव धार्मिकः। सा चानन्दानुभूतिस्तस्यैव सम्भवति, यो धर्मानुष्ठानेऽभ्यासवान्। तस्माद् धर्मानुष्ठानेऽभ्यासस्यैव प्रयोजकत्वं प्रधानतया। अभ्यास एव चरित्रस्योत्कर्षाधायक इति सुकरातारिस्टाटिलयोरत्र मतभेदः।

मेकेंजीमहोदयश्च ज्ञानाभ्यासयोः समुच्चयमुखेनानयोः समन्वयं करोति । तन्मते धर्मस्य ज्ञानाभ्यासोभयात्मकत्वमभिमतम् । अभ्यासस्तु सामान्यशब्दः । यस्य कस्याप्यभ्यासः सम्भवति । धर्माभ्यासस्तु नैतिकमिन्नदृष्टिमपेक्षते । सा च सदसद्विवेकरूपैवेति ज्ञानसाध्या । तस्मादभ्यासस्य नैतिकत्वावधारणे ज्ञानमेवाभ्युपाय इति ज्ञानाभ्यासोभयात्मक एव धर्मः । न केवलं ज्ञानात्मकः, न च केवलमभ्यासात्मक इत्येव तस्य ज्ञानाभ्याससमुच्चयवादः ।

भारतीयदर्शनेऽपि ज्ञानकर्मविवादरूपेणायं विषयो बहु विवेचितः । तत्र कर्मवादिनो मीमांसका अरिस्टाटिलमहोदयस्याभ्यासपक्षवत् कर्मण एव स्वर्गसाधनत्वमामनन्ति । ज्ञानवादिनश्च वेदान्तिनो ज्ञानस्यैव निःश्रेयससाधनत्वं कर्मणश्च बुद्धिशुद्धिमात्रहेतुत्वं सङ्गिरन्ते । यजुर्वेदे तु ज्ञानभिन्नत्वादविद्यापदवाच्येन कर्मणा मृत्युसन्तरणं विद्यया चामृतत्वप्राप्तिरिति ज्ञानकर्मसमुच्चय एव "अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इत्यादिना प्रत्यपादि । स एव च समुच्चयपक्षो मनुनाऽपि "तपसा कल्मषं हन्ति विद्ययाऽमृतमश्नुते" इत्यादिनाऽनूदितः । सर्वत्रापि समुच्चयस्य दार्ढ्यहेतुत्वाद् ज्ञानकर्मसमुच्चयस्य दार्ढ्यवद् मेकेंजीमहोदयस्य ज्ञानाभ्याससमुच्चयपक्ष एव श्रेयानिति नव्याः ।

## परिस्थितिः ( सरकमस्टैन्स )

परिस्थितयोऽप्यंशतो व्यवहारस्य नैतिकत्वावधारणे हेतवो भवन्ति । मानवव्यवहारो हि प्रधानतश्चरित्रजन्योंऽशतश्च परिस्थितिप्रभावितो भवति । चरित्रपरिवर्तनक्षमस्य बाह्यवातावरणस्यैव परिस्थितिपदवाच्यता, न तु वातावरणमात्रस्य । पुरुषो यस्मिन् देशे काले वा निवसति, तत्रत्या बाह्या अवस्थाविशेषास्तस्य व्यवहारं प्रभावयन्ति । स च प्रभावो व्यक्तिभेदेन भिद्यते । विभिन्नासु व्यक्तिषु वैजात्येन बाह्यदशानां प्रभावो लक्ष्यते । युद्धे वायुयानसाहाय्येन वायवीयाक्रमणकाले भयाक्रान्ता नागरिकाः शरणार्थं रक्षागृहान् प्रविशन्ति । तस्मिन्नेव काले चौरा अरक्षितमापणद्रव्यमपहर्तुमुत्सहन्त इति समानरूपाऽपि बाह्यस्थितिर्विभिन्नव्यक्तिषु विजातीयं प्रभावमुपजनयति, विजातीयं च व्यवहारभेदं प्रवर्तयति । तत्र व्यवहारभेदे चरित्रमेव मूलम् । या बाह्यस्थितयः पुरुषस्य स्वचरित्रानुरूपा भवन्ति, ता एव विशेषतस्तस्य ध्यानविषयाः, इतरास्तूपेक्षाविषया एव । तस्मात् परिस्थितयश्चरित्राश्रिताः, न तु सर्वथा स्वतन्त्राः । चरित्रानुरूप्येणैव बाह्यस्थितयः परिस्थितिपदवाच्यतां भजन्ते, नान्यथेति ।

## व्यवहारः ( कण्डक्ट )

चरित्रस्य प्रकारात्मको दृश्यपक्ष एव व्यवहारः । तस्मिन्नैच्छिकानां कर्मणामभ्यासनुपार्जितानामभ्यासानां च समावेशो भवति, न त्वनैच्छिकानां कर्मणाम् । अनैच्छिकानि कर्माणि विचारसंकल्पादिहेतुशून्यत्वान्न नैतिकं निर्णयमर्हन्ति । तस्मान्न तानि व्यवहारान्तर्भूतानि भवन्ति । हर्बटस्पेन्सरमहोदयस्तु विस्तीर्णेऽर्थे व्यवहारशब्दं प्रयुङ्क्ते । तदनुसारमनैच्छिकं कर्मापि तत्रान्तर्भवति ।



# चतुर्थः परिच्छेदः

## नैतिको निर्णयः

### नैतिकनिर्णयस्य स्वरूपम्

"विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः" इति न्यायशास्त्रोक्तं निर्णयलक्षणम्। परमत्र नीतिशास्त्रे "आचारस्य सदसत्त्वावधारणमेव निर्णयः", शास्त्रस्यास्य आचारादर्शानुसन्धायकत्वात्। स च नैतिकनिर्णयो वस्तुस्थितिसूचकान्निर्णयाद् भिन्नः। वस्तुस्थितिसूचको निर्णयः (जजमेण्ट ऑफ फैक्ट) वस्तुनः सत्तामात्रसूचको वर्णनात्मकश्च (डिस्क्रिप्टिव) निर्णयो भवति। नैतिकश्च निर्णयो मूल्यावधारणप्रधानः समालोचनात्मकश्च (ऐप्रीशिएटिव एण्ड क्रिटिकल जजमेण्ट) निर्णयो भवति। तस्मात् कर्मणो नैतिकमूल्यावधारणपरः सदसत्त्वोद्घोषणपरश्च नैतिको निर्णयः। म्यूरहेडमहोदयस्य मतेन तार्किकनिर्णय-न्यायनिर्णययोः (लॉजिकल जजमेण्ट एण्ड जुडीशियल जजमेण्ट) यादृशो भेदस्तादृश एव वस्तुस्थितिसूचकनिर्णय-मूल्यसूचकनिर्णययोश्च भवति। (नीतिशास्त्र, पृ० १०३)

### निर्णयप्रक्रिया

किमपि कर्मविशेषमवलोक्य तन्मानदण्डभूतेन आदर्शेण सह साधर्म्य-वैधर्म्यपरीक्षायामादर्शानुरूप्ये सति साधुत्वं तद्वैपरीत्ये चासाधुत्वं निर्णीतं भवति। ततश्चादर्शानुरूप्यमेव कर्मणः साधुत्वासाधुत्वावधारणे प्रयोजकम्। तस्मात् "इदं कर्म सत्, आदर्शानुरूपत्वात्" इत्यनुमानेन साधुत्वावधारणम्। परं सामान्यत इयमनुमानप्रक्रिया सर्वत्र स्फुटं नावभासते; तथापि सङ्कीर्णकर्मप्रसङ्गे परीक्षायामनुविधयैव साधुत्वनिर्णय इति स्फुटं प्रतीयते। सामान्यतोऽन्तःस्फूर्तियुक्तेन उपनयेनैव (इण्ट्यूटिव सब्सम्पशन) नैतिकतानिर्णय इति ब्रेडलेमहोदयः।

यथा चिकित्साशास्त्रे रोगः, निदानम्, आरोग्यम्, भैषज्यं चेति चत्वारो व्यूहाः; यथा वा अध्यात्मशास्त्रादौ हेयम्, हेयहेतुः, हानम्, हानोपायश्चेति चत्वारो व्यूहा भवन्ति, तद्वदत्र नीतिशास्त्रेऽपि निर्णायकः, निर्णेयं वस्तु, निर्णयस्य मानदण्डः, निर्णयशक्तिश्चेति चत्वारो व्यूहाः।

### नैतिकनिर्णयस्य तार्किकसौन्दर्यनिर्णयाभ्यां भेदः
### (मारल, लॉजिकल एण्ड एस्थेटिक जजमेण्ट)

नीतिशास्त्रम्, न्यायशास्त्रम्, सौन्दर्यशास्त्रं चेति त्रयं नियामकं विज्ञानमादर्शविज्ञानं वा (नारमेटिव साइन्स) इति पूर्वमुपपादितम्। तानि च 'सत्यं शिवं सुन्दरम्' इत्येवं निर्दिष्टानां जीवनस्य सर्वोच्चानामादर्शानां निरूपणं कुर्वन्ति। परमं सत्यं न्यायशास्त्रस्य,

परमं मङ्गलं नीतिशास्त्रस्य, परमं च सुन्दरं सौन्दर्यशास्त्रस्य विषयः। तथा च तार्किको निर्णयः सत्यस्यादर्शं नैतिको निर्णय आचारस्यादर्शं सौन्दर्यविषयको निर्णयश्च सौन्दर्यस्यादर्शमनुसरति। त्रयोऽप्येते निर्णया आलोचनात्मका मूल्यावधारणपराश्चेति तेषामस्ति साम्यम्। तथापि नैतिकी बाध्यता नैतिकं निर्णयमनुसरति, न तार्किकम्, नापि सौन्दर्यविषयकं निर्णयमिति नैतिकनिर्णयस्य ताभ्यां भेदः। यत् सत्कर्म भवति तस्यानुष्ठानार्थं नैतिकी बाध्यताऽप्यनुभूयते, तदनुमोदनभावना च समुदेति। एवमसत्कर्मणा सहासहमतिस्तदननुष्ठानार्थं नैतिकी बाध्यता च प्रतीयते। सम्मति-रसम्मतिः, सन्तोषः पश्चात्तापश्चेति नैतिक्यो भावनाः। कर्तव्यबुद्धिश्च नैतिकी बाध्यता। नैतिकनिर्णयस्य स्वरूपं नैतिकभावनानुगतं नैतिकबाध्यतात्मकं च भवति। तार्किक-सौन्दर्य-विषयकौ च निर्णयौ न नैतिकभावनानुगतौ, नापि नैतिकबाध्यतात्मकाविति नैतिकनिर्णयस्य ताभ्यां सुतरां भेदः।

### नैतिकनिर्णयस्य विषयः ( आब्जेक्ट ऑफ मॉरल जजमेण्ट )

ऐच्छिकमभ्यासजनितं च कर्म नैतिकनिर्णयस्य विषयतामवगाहत इति पूर्वं प्रतिपादितम्। तत्रैच्छिकं कर्म त्रिविधां प्रक्रियामनुभवति। सर्वतः प्राङ्मानसिकप्रक्रियायां प्रयोजनाभिप्रायेच्छाविमर्शनिर्वाचनसङ्कल्पादिमनोव्यापारविषयतामधिगच्छति। ततः शरीर-व्यापारविषयतारूपां द्वितीयाम्, ततश्च बाह्यपरिणामरूपां तृतीयामिति त्रैविध्यमैच्छिकस्य कर्मणो भवति। तत्र नैतिकनिर्णये कस्य प्राधान्यमिति समुदेति त्रिविधा जिज्ञासा—

१. किमान्तरिकप्रेरणास्वरूपेण कर्मणो नैतिकत्वं निर्णीयते, किं वा बाह्यपरिणाम-स्वरूपेण ?

२. आन्तरिकप्रेरणापक्षेऽपि किं प्रयोजनेन ( मोटिव ), किं वा अभिप्रायेण ( इन्टेन्शन ) नैतिकतानिर्णयः ?

३. किमभिप्रायः किं वा चरित्रं नैतिकनिर्णयस्य विषयः ? इति।

तत्रान्तरिकप्रेरणया बाह्यपरिणामेन वा नैतिकतानिर्णय इत्यत्र सुखवादिनां ( हेडोनिस्ट्स ) सहजज्ञानवादिनां ( इन्यूशनिस्ट्स ) च महान् विवादः। बेंथम-मिल-प्रभृतयः सुखवादिनो बाह्यपरिणामेन, काण्ट-बटलरप्रभृतयश्च सहजज्ञानवादिन आन्तरिक-प्रेरणायाः स्वरूपेण च नैतिकतानिर्णयं मन्यन्ते। मिलमहोदयः कथयति यत् प्रेरणाया नैतिकतया न कश्चित् साक्षात् सम्बन्धः। बेंथममहोदयोऽपि लिखति यत् प्रेरणायाः साधुत्वं तस्याः परिणामेनैव भवति। उभावप्येतौ सुखवादिनौ ( हेडोनिस्ट्स )। तयोश्च मते कर्मणः परिणामेनैव नैतिकतानिर्णयो न तत्प्रेरणात्मकेनान्तरेण व्यापारेण। सुखवादिनां मते सुखस्य प्राप्त्यै दुःखस्य परिहारायैव च सर्वेषां प्रयत्न इति सुखदुःखभावनैव कर्मणः स्रोत-भूता मूलप्रेरणा। सहजज्ञानवादी ( इन्यूशनिस्ट ) बटलरमहोदयो लिखति यत् कर्मणः साधुत्वासाधुत्वे प्रेरणैव ( मोटिव ) निमित्तम्। काण्टमहोदयश्च कर्मफलस्य नैतिक-निर्णये प्रयोजकत्वं नाङ्गीकरोति।

यत्र प्रेरणानुरूपो भवति परिणामः, तत्रोभयोः सारूप्यादुभयमपि नैतिकनिर्णय-प्रयोजकमिति नात्र विप्रतिपत्तिः। यत्र तु तयोर्वैरूप्यम्, तत्रैव विवादः। यथा सर्वात्मना

प्रयतमानेऽपि चिकित्सके यदि दैवदुर्विपाकादनिष्टं भवति रोगिणस्तदा प्रेरणायाः साधुत्वेन दोषभाङ्न भवति चिकित्सकः। यत्र च क्रोधाविष्टः कश्चित् लोष्ठाद्यभावे हस्तस्थितं रूप्यकखण्डमेव शिरोभञ्जनार्थं प्रहिणोति, तच्च लक्ष्यभ्रष्टं तद्धस्तगतं च ताड्यमानस्योपकाराय सम्पद्यते, तदा फलस्य साधुत्वेऽपि प्रेरणाया असाधुत्वाद् दोषभागेव भवति प्रहर्ता। एवं प्रेरणाफलयोर्वैरूप्ये आन्तरिकेनोद्देश्येनैव ( मोटिव ) नैतिकताया निर्णय इति डा० जानसन-महोदयोऽपि समर्थयति।

## किं प्रयोजनं नैतिकतानिर्णायकं किं वाऽभिप्रायः ? ( मोटिव एण्ड इन्टेंशन )

काण्ट-बटलरप्रभृतीनां सहजज्ञानवादिनां ( इन्ट्यूशनिस्ट ) नयेऽन्तःप्रेरणाया एव नैतिकतानियामकत्वमभिमतम्। सुखवादिनां नये सुखभावनैवान्तःप्रेरणात्मिका। न च सा नैतिकतानिर्णायिका सुखवादिनामभिमता, नापि सहजज्ञानवादिनाम्। सुखवादिनां नये परिणामस्यैव नियामकत्वम्, ज्ञानवादिनां सुखभावनाया प्रेरकत्वाभावेनानियामकत्वम्। सहजज्ञानवादिनां नये प्रयोजनेऽभिप्राये वा प्रेरकत्वम्, तयोरन्यतरस्यैव च नैतिकतानिर्णायकत्वं भवति। तत्र प्रयोजनाभिप्राययोः को भेद इति भवति जिज्ञासा। तत्र प्रयोजनं लक्ष्यात्मकम्। लक्ष्यस्यैव विचारः प्रयोजनेऽन्तर्भवति, न तु साधनानाम्। अभिप्राये तु साध्य-साधनयोरुभयोरपि समावेशः। तदेवं "प्रयोजनापेक्षया व्यापकोऽभिप्रायः; अधिकदेशव्यापकत्वात् परोऽभिप्रायः, व्याप्यत्वाच्चापरं प्रयोजनम्" इत्यनयोर्भेदोऽभिमतः सहजज्ञानवादिनाम्। तदेवं विस्पष्टे प्रयोजनाभिप्राययोर्भेदे तयोर्मध्ये कस्य नैतिकतानियामकत्वमिति समुदेति जिज्ञासा।

तत्र केवलं साध्यविचारात्मकस्य प्रयोजनस्य नैतिकतानियामकत्वं न सम्भवति। कदाचित् प्रयोजनस्य साधुत्वेऽपि तत्सिद्ध्यर्थमुपयुज्यमानानामसाधुत्वं भवति। ततश्चासदुपाय-साध्यस्य प्रयोजनस्य साधुत्वेऽपि साधनानामसाधुत्वात् तत्कार्यं न प्रशस्यते। यथा कश्चिद् वणिग् धनलाभाय अनुचितानुपायानवलम्बते। तत्र धनलाभरूपं प्रयोजनं तु सदेव, तथाप्यनुचितसाधनानामुपयोगेन असदेव भवति तत्कर्म। यथा वा कश्चित् पाटच्चरो धनिनां धनमपहृत्य निर्धनानां साहाय्यं करोति। तत्र निर्धनसाहाय्यरूपस्य प्रयोजनस्य साधुत्वेऽपि चौर्यादिसाधनानामसाधुत्वाद् गर्हितमेव भवति तत्कर्म। तस्मान्न केवलं प्रयोजनमेव नैतिकतानिर्णायकम्। यत्र साध्यं साधनं चोभयमपि सद् भवति, तदेव कार्यं सत्।

साध्यसाधनयोरुभयोर्विचारोऽभिप्रायेऽन्तर्भवतीति तस्यैव नैतिकतानिर्णायकत्वम्। मेकेंजीमहोदयोऽभिप्रायभेदान् बहुधा व्याचष्टे। तद्यथा—

( १ ) कस्यापि कर्मणस्तात्कालिके ( इमीजिएट ) दूरस्थे ( रिमोट ) चाभिप्राये भेदः सम्भवति। नद्यां निमज्जतः कस्याप्यपराधिनो रक्षणे एकस्य तत्प्राणरक्षणमात्रे परस्य च राजबन्धनागारनिक्षेपणेऽभिप्रायः। एवं तात्कालिकाभिप्रायस्य तुल्यत्वेऽपि दूरस्थेऽभिप्राये भेदः। दूरस्थोऽभिप्रायः कदाचिद् भ्रमवशात् प्रयोजनपदेनाप्यभिधीयते। तत्र तात्कालिको दूरस्थश्चेत्युभयविधोऽप्यभिप्रायो नैतिकनिर्णयस्य विषयो भवति।

( २ ) आन्तरिक-बाह्यभेदेनाप्यभिप्रायभेदो भवति। कस्याप्यतिशयदुःखदर्शना-दस्माकं हृदयं तद्दुःखं सोढुं न क्षमते, द्रवीभवति च। तद्दुःखनिवारणार्थं वयं प्रयता-

महे। तत्र तद्दुःखनिवारणे बाह्योऽभिप्रायः, स्ववेदनानिवारणे चान्तरोऽभिप्रायः। अयमान्तरोऽभिप्रायो नैतिकनिर्णयस्य विषयो भवति।

(३) प्रत्यक्ष-परोक्षत्वेनापि (डाइरेक्ट, इन्डाइरेक्ट) चाभिप्रायभेदो भवति। कस्याप्यपराधिनो दण्डव्यवस्थायां तद्दण्डविधाने प्रत्यक्षोऽभिप्रायः, परेषां च तादृक्प्रवृत्तिप्रतिविधाने परोक्षोऽभिप्रायश्च। स चोभयविधोऽप्यभिप्रायो नैतिकनिर्णयस्य विषयो भवति।

(४) कर्मणो ज्ञाताज्ञाताभिप्राययोः (कांशस, अन्कांशस) भेदोऽपि भवति। अज्ञातोऽभिप्रायो मनसोऽर्धचेतनस्तरे निहितो भवति। स व्यवहारमज्ञातरूपेणैव प्रभावयति, न च कर्ता तत्प्रभावं स्वीकरोति। यथा कश्चिल्लोकसेवात्मकं किञ्चित् कार्यविशेषं करोति। तत्र लोकसेवायां ज्ञातोऽभिप्रायः, तया च सेवया प्रशंसादिप्राप्तावज्ञातोऽभिप्रायः। तत्र ज्ञातोऽभिप्रायस्तु नैतिकनिर्णयस्य विषयो भवत्येव, परं यदाऽज्ञातोऽप्यभिप्रायोऽनुभवगोचरो भवति, तदा सोऽपि नैतिकनिर्णयस्य विषयो भवत्येव।

(५) कर्मण आदर्शगत-वस्तुगताभिप्राययोरपि (फार्मल एण्ड मैटीरियल) भेदो भवति। कर्मणोऽभीष्टं फलमेव वस्तुगतोऽभिप्रायः। तद्गतो मूर्तसिद्धान्तश्चादर्शगतोऽभिप्रायः। अस्मद्देशे जनसङ्घानुयायिनः समाजवादिनश्च वर्तमानं कांग्रेसप्रशासनं परिवर्तयितुं कामयन्ते। तयोर्वस्तुगतोऽभिप्रायस्तुल्य एव। तथापि तयोरादर्शगतोऽभिप्रायो भिन्नः। जनसङ्घवादिनां मते कांग्रेस-प्रशासनं 'हिन्दूकोड-विधाना'दिनिर्माणेन समाजसुधारे विचारनिरपेक्षं त्वराधिक्यं प्रदर्शयति। समाजवादिनां मते च राष्ट्रीयकरणत्वादिविषये निरुद्योगशीलताऽस्य प्रशासनस्य प्रतिगामितां सूचयति। एवमादर्शगतो वस्तुगतश्चोभयविधोऽप्यभिप्रायो नैतिकनिर्णयस्य विषयो भवति।

तदस्यां द्वितीयविचारणायामभिप्राय एव नैतिकनिर्णयस्य नियामकः।

## नैतिकनिर्णयस्य विषयोऽभिप्रायश्चरित्रं वा

मेकेंजीमहोदयस्य मतेऽभिप्राय एव नैतिकनिर्णयस्य विषय इति कथनं न समीचीनम्। स तु चरित्रस्य नैतिकनिर्णये नियामकत्वं विषयत्वं चाङ्गीकरोति। अभिप्रायो न खलु स्वतन्त्रः कश्चिद् मनोव्यापारः। स तु सङ्कल्पाभ्यासजनितेन स्थिरमनोवृत्त्यात्मकेन चरित्रेण प्रभावितो भवति। तस्माच्चरित्रमेव परमार्थतो नैतिकनिर्णयस्य विषय इति मेकेंजीमहोदयस्याभिप्रायः।

तत्रेदं विचारणीयम्—यदा सामान्यतः कस्यापि कर्मविशेषस्य नैतिकत्वविचारो भवदि, तत्र कर्ममात्रविषये जिज्ञासा भवति, न तु पुरुषस्य चरित्रविषये। सच्चरित्रस्याप्यसदभिप्रायदर्शनात्, असच्चरित्रस्यापि च सदभिप्रायसम्भवात् कर्मसामान्यस्य नैतिकतानिर्णयेऽभिप्रायस्यैव निर्णयविषयत्वम्। यदा तु पुरुषस्य चरित्रविषय एव सदसदावधारणजिज्ञासा, तदा तु चरित्रमेव विषयः। अन्यथा सामान्यतः कर्मणो नैतिकत्वावधारणप्रसङ्गेऽभिप्राय एव नैतिकनिर्णयस्य विषय इति सिद्धान्ताभिमतः पक्षः।

## कः खलु नैतिकनिर्णयस्य (सब्जेक्ट आफ मॉरल जजमेण्ट) कर्ता?

कः खलु नैतिकनिर्णयस्य कर्ता भवतीत्यत्र मेकेंजी-शेफट्सबरीप्रभृतीनां मतभेदः। मेकेंजी-महोदयस्य मते आदर्श एव नैतिकत्वे निर्णेता। आदर्शभूतेन केनापि मानदण्डेनैव कर्मणो नैतिकताया अवधारणं भवति। यश्च तत्रादर्शः, स एव निर्णायकः।

शेफट्सबरीमहोदयस्तु नैतिकसंविद्वादी विद्वान्। कलायाः सदसत्त्वं सौन्दर्यमसौन्दर्यं च कलाविशेषज्ञ एव निर्णेतुमर्हति। कलाकारश्च सौन्दर्यप्रशंसार्थं विशेषज्ञस्यैव निर्णयमपेक्षते। एवमेव व्यवहारस्य मूल्याङ्कनमपि विशेषज्ञमात्रायत्तम्। ततश्च नीतिविशेषज्ञ एव नैतिकनिर्णयस्य कर्ता।

परमत्र कलायां नीतिशास्त्रे च किञ्चिदन्तरं विद्यते। कलायां कलाफलस्य सौन्दर्यासौन्दर्यनिर्णयविषयत्वम्। अत्र च कर्मण एव, न तु कर्मफलस्य निर्णयविषयत्वमिति। कलाकारः सुमनोरमं चित्रं चित्रयति, कलाविशेषज्ञश्च तस्य मूल्याङ्कनं करोति। नीतिशास्त्रे तु कर्मण एव मूल्याङ्कनम्, न तु फलस्य। तदपि कर्ता एव प्रवृत्तेः प्राक् करोति। तस्य सदसत्त्वपक्षं विविच्यैव कर्तुः कर्मणि प्रवृत्तिर्भवतीति कर्ता एव तत्राद्यो निर्णेता, न तु नीतिविशेषज्ञः।

एडमस्मिथमहोदयस्यापि मतं शेफट्सबरीमतसदृशमेव। तन्मते पुरुष एव स्वकर्मणः परकर्मणश्च निरपेक्षसाक्षित्वेन निर्णेता। यदा कश्चित् परस्य कर्मणो मूल्याङ्कनं करोति तदा अन्येऽपि तस्य मूल्याङ्कनं विधास्यन्तीति प्रतिपद्यते। तदा स्वकर्मणो विवेचनोन्मुखीमन्तर्दृष्टिं प्रपद्यते। कीदृशं मे कर्म कियतीं प्रशंसां निन्दां वाऽर्हति, कियदस्य मूल्यमिति स्वत एव स्वकर्मणो विवेचको द्रष्टा चाभिसम्पद्यते। तदेवमात्मा स्वत एव स्वकर्मपरीक्षकः। तत्रादर्शभूत आत्मा परीक्षकः, यथार्थस्तु कर्मानुष्ठाता परीक्ष्यः। न च सर्वत्र परकर्मपरीक्षोत्तरमेव स्वकर्मपरीक्षणं मन्तव्यम्, परकर्मपरीक्षणमन्तरापि स्वकर्मनिर्णयसम्भवात्। सर्वोऽपि जनः स्वाभिप्रायं प्रवृत्तिं च जानातीत्यादर्शानुसारं स्वत एव स्वकर्मणो नैतिकमूल्यावधारणक्षमो भवति। तस्मान्न नीतिविशेषज्ञमात्रायत्तो नैतिकनिर्णयः। किन्तु कर्ताऽपि तत्र निर्णेता। कर्तैव वाद्यो निर्णायक इति॥



# पञ्चमः परिच्छेदः

## नैतिकप्रत्ययाः

### नैतिकप्रत्ययाः ( मारल कन्सेप्ट्स )

आचारस्यादर्शानुसन्धायकं नीतिशास्त्रमिति तत्र सत्यानृतयोः, शुभाशुभयोः, अवान्तरादर्श-परमादर्शयोश्च स्वरूपावधारणं नैतिकदृष्ट्या कर्तुर्योग्यत्वायोग्यत्वयोः कर्तव्याधिकारयोः कर्मस्वातन्त्र्योत्तरदायित्वयोश्च विवेचनमपरिहार्यम्। तदेतैः पदैर्नीतिशास्त्रे किं गृह्यते, एतेषां विषये कीदृशो नीतिशास्त्रस्य प्रत्ययः, कीदृक् च स्वरूपं तेषामभिमतमिति सर्वं समासतोऽत्र विविच्यते।

### सत्यानृते ( राइट एण्ड रांग )

सदेवात्र सत्यपदेन असच्चानृतपदेन ग्राह्यम्। आदर्शं नियमं वा यदनुसरति, तदेव सत्; तद्विपरीतं चासत्। ततश्च आचारादर्शानुगतं कर्म सदित्युच्यते नियमानुगतं च। आचारस्य य आदर्शः सोऽपि द्विविधः—कश्चिदवान्तरादर्शः, एकश्च सर्वानुगतः परमनिःश्रेयसभूतः परमादर्शः। भारतीये साहित्येऽस्य आदर्शशब्दस्य स्थाने पुरुषार्थशब्दः प्रयुज्यते। परमादर्शः 'परमपुरुषार्थः' उच्यते। सत्कर्म यमादर्शमभिलक्ष्यानुष्ठीयते, स आदर्शः शुभ( गुड )पदवाच्यः पुरुषार्थो भवति। बहुविधावान्तरादर्शापेक्षया सर्वानुगतः परमादर्शः ( हाइएस्ट गुड ) शुभतमः परमपुरुषार्थश्च भवति।

### सत् ( राइट ), शुभम् ( गुड ), शुभतमं ( हाईएस्ट गुड ) च

सत्कर्म पुरुषार्थरूपस्य शुभस्य साधनम्। यच्चाशुभस्य साधनं तदसत्। पुरुषार्थस्य साध्यत्वात् तदात्मकं शुभमेव प्रधानम्, सतश्च साधनरूपत्वात् तद्गौणम्। शुभतमात्मकः परमपुरुषार्थ एवादर्शः, यदुद्देश्येन आत्मसाक्षात्कारे प्रयत्नो विधेयः। तदुपलब्धिश्च सर्वात्मना तृप्तिकरी च। अवान्तरादर्शास्तु लौकिका आदर्शा पुरुषार्थरूपा भवन्ति। पुरुषेण यः अर्थ्यते काम्यते स एव पुरुषार्थः। लौकिके व्यवहारे धनादिकमपि पुरुषेच्छाविषयं भवतीति तत्रापि पुरुषार्थपदप्रयोगः। एवं पुरुषार्था बहुविधाः। सर्वोत्तमश्च परमानन्दरूपः परममङ्गलमयः परमः पुरुषार्थो निःश्रेयसरूपः। लौकिकाः पुरुषार्थास्तु साध्यसाधनोभयात्मकाः। परमपुरुषार्थस्तु साध्यभूत एव, न तु कस्यचिदन्यस्य साधनभूतः। तस्मात् सत्कर्म साधनं पुरुषार्थरूपस्य शुभस्य, परमपुरुषार्थरूपस्य शुभतमस्य च।

### कर्तव्याधिकारौ ( ड्यूटी एण्ड राइट )

मानवो हि सामाजिको जीवः। सर्वेषां सामान्यहितस्य रक्षणार्थं सामाजिकनियमानां विधानं भवति। त एव सामाजिका नियमाः कर्तव्याधिकाररूपाः। यत्रैकस्य कर्तव्यम्, तत्रैवापरस्याधिकारः; यश्चैकस्य अधिकारः, स एवापरस्य कर्तव्यं भवति। तत्र पुरुषाः स्वोपार्जितं द्रव्यं रक्षितुं भोक्तुं च समाजेनाधिकृताः। ततः स्वोपार्जितस्य द्रव्यस्य

रक्षणं भोगश्च पुरुषस्याधिकारः । तत्परिपालनं च समाजान्तःपातिनां सर्वेषामपि सदस्यानां कर्तव्यम् । यः कश्चिदपि समाजप्रदत्तं तमधिकारं व्याहन्तुं प्रयतते, स स्वकर्तव्याच्च्यवते, दण्डार्हश्च समाजे भवति । तस्मात् कर्तव्याधिकारौ सापेक्षौ सामाजिकीं व्यवस्थामनुसरतः । समाज एव कर्तव्यानामधिकाराणां च निर्माता रक्षकश्च ।

## कर्तव्यं धर्मश्च ( ड्यूटी एण्ड वर्च्यू )

सत्कर्मणामनुष्ठानं पुरुषस्य कर्तव्यम् । कर्तव्यानुष्ठानजन्यश्च अभ्युदयहेतुर्धर्मः । कर्तव्यं बाह्यं साधनभूतं च, धर्मश्च आन्तरोऽभ्युदयहेतुरवान्तरादर्शभूतः पुरुषार्थः । एवमसत्कर्मणामनुष्ठानं पुरुषस्याकर्तव्यम् । अकर्तव्यानुष्ठानं पुरुषस्यापकर्षनिमित्तम् । अकर्तव्याभ्यासोऽधर्मजनकः । कर्तव्याभ्यासश्च धर्मजनकः । धर्माधर्माविव पुण्यपापपदवाच्यावपि भवतः । पुण्येन चरित्रस्य नैतिक उत्कर्षः, पापेन च नैतिकोऽपकर्षो भवति । पुण्यपापौ हि चरित्रस्योत्कर्षापकर्षसूचकौ । पुण्यपापौ मुख्यतश्चरित्रसम्बद्धौ । सदसच्छब्दौ च मुख्यतः कर्मसम्बद्धौ । तदेवं सदसतोः पुण्यपापयोश्च सामान्यतः कारणकार्यसम्बन्धः, तथापि कदाचित् सच्छब्दस्य चरित्रेण पुण्यशब्दस्य च कर्मणा सह सम्बन्धमभिप्रेत्य सच्चरित्रम्, पुण्यकर्म इत्येवमादयः प्रयोगा अपि भवन्ति । ते तु भाक्ताः ।

## पुण्यपापयोस्तारतम्यम्

सदसतोस्तु तारतम्यं न भवति । सत्कर्म सदेव भवति, असच्चासदेव । न तत्र न्यूनाधिक्यं भवति । पुण्यपापयोस्तु मात्राकृतं वैशिष्ट्यं भवति । तस्मात् तारतम्यं तयोः । काण्ट-मार्टिन्युमहोदययोर्मतेन प्रलोभनप्रतिरोधतारतम्यमेव पुण्यपापयोस्तारतम्यावधारणे मूलम् । प्रलोभनविशेषस्य प्रतिरोधिकाया इच्छाशक्तेर्यावान् प्रबलो विरोधस्तावानेव पुण्यातिशयः । अयमंशतो यथार्थः पक्षः । परं ये जनाः प्राक्तनसंस्कारवशाद् असत्कर्मानुष्ठानार्थं प्रबलां प्रेरणां नानुभवन्ति, विशिष्टप्रयासमन्तरा सारल्येनैव सत्कर्मानुष्ठानक्षमा भवन्ति, तेऽपि महापुण्यशालिन एव । प्रलोभनप्रतिरोधप्राबल्यतारतम्यमात्रस्यैव पुण्यावधारणहेतुत्वे तु तत्र प्रलोभनाभावेन प्रतिरोधप्राबल्याभावाद् न स्यादेव कश्चित् पुण्यातिशय इति मतमिदमंशत एव यथार्थम् । वस्तुतस्तु चरित्रबलतारतम्यमेव पुण्यातिशयतारतम्ये प्रयोजकम् ।

## कर्तव्यद्वैविध्यम्

काण्टमहोदयेन पूर्णबाध्यतामूलकं ( ड्यूटी आफ़ परफेक्ट आब्लीगेशन ) कर्तव्यम्, अपूर्णबाध्यतामूलकं कर्तव्यं ( ड्यूटी आफ़ इम्परफेक्ट आब्लीगेशन ) चेति द्विविधं कर्तव्यं निर्दिष्टम् । राजकीयादेशेन विधानेन वा निर्धारितं कर्तव्यं पूर्णबाध्यतामूलकं कर्तव्यं भवति । तदनुष्ठानं सर्वैरपि बाध्यतयैव विधेयम् । तदुल्लङ्घने राजदण्डः शिरसि पतति । एवंविधे कर्तव्ये परस्याधिकारोऽपि भवति । यथोत्तमर्णाधमर्णयोः सम्बन्धे अधमर्णात् स्वद्रव्यस्य प्राप्तिरुत्तमर्णस्याधिकारः, तत्प्रदानं चाधमर्णस्य कर्तव्यम् । तच्च पूर्णबाध्यतामूलकं कर्तव्यम् । राजनियमानुसारं गृहीतस्य ऋणस्य प्रत्यावर्तनमवश्यं विधेयम् ; अन्यथा राजदण्डोऽस्य शिरसि निहितो भवति । इदं पूर्णबाध्यतामूलकस्य

( ड्यूटी आफ़ परफेक्ट आब्लीगेशन ) कर्तव्यस्य निदर्शनम् । तदेतस्य कर्मणोऽनुष्ठानं पुण्यकरं न भवति । अकरणे प्रत्यवायजनकं तु भवत्येव । तथा चेदं वैदिककर्मकाण्डे विहितेन नित्यकर्मणा तुल्यम् । तत्र सन्ध्यावन्दनादीनां नित्यानां कर्मणामनुष्ठानं न पुण्यजनकम्, अननुष्ठानं तु पापजनकं भवतीत्येवाभिमतम् । तथा च 'अकरणे प्रत्यवायसाधनानि नित्यानि' इत्येव नित्यकर्मलक्षणम् । तद्वदेवात्र पूर्णबाध्यतामूलकं कर्तव्यमकरणे प्रत्यवायजनकं भवति ।

स्वार्थमनपेक्ष्य शिबिदधीच्यादिवत् स्वदेहत्यागेनापि परार्थघटनं परत्राणादिरूपं च कर्तव्यं द्वितीयमपूर्णबाध्यतामूलकं कर्तव्यम् ( ड्यूटी आफ़ इम्परफेक्ट आब्ली-गेशन ) । एवंविधस्य कर्तव्यस्यानुष्ठाने न काऽपि बाह्या बाध्यता, न च तदननुष्ठाने दण्डभयं किञ्चित् । स्वेच्छायत्तमेव तत् । ततश्च तदनुष्ठानं पुण्यवत्तरं पुण्यवत्तमं वा । राजशासनं नियतस्य कर्तव्यस्य ( डिटरमिण्ड ड्यूटी ) पालनं कारयति । तदनुष्ठाने पुरुषो भयात् प्रवर्तते कर्तव्यभावनया वेति दुःशकं निर्णेतुम् । यदा तु कश्चिद् राजाज्ञया अनिर्दिष्टं ( अनडिटरमिण्ड ड्यूटी ) सत्कार्यमनुतिष्ठति, तदा तत्र तस्य चरित्रोत्कर्षः सूचितो भवति । यथा शिबिदधीच्यादिकर्मणाम् । तेषां चरित्रस्योत्कर्ष एव सूच्यते । पुण्यातिशयाच्चाद्यापि प्रातःस्मरणीयास्ते ।

तदेवं यः स्वार्थमनपेक्ष्य स्वार्थं विहाय परार्थमनुतिष्ठति, परार्थं साधयति, सोऽति-शयेन पुण्यवान् । यदि तु तस्यैव परार्थस्य साधनं स्वार्थाविरोधेन स्वार्थरक्षणेनापि सम्भवति, तदा तु स्वार्थं विहाय तदनुष्ठानं तावत् पुण्यजनकं न भवति ।

यदि तु स्वार्थसाधनाय कश्चिदसत् कर्म करोति, तदा पापभाग् भवति सः । परं तत्र स्वार्थस्य मात्रया पापस्य तारतम्यं भवति । यदि स्वल्पस्य स्वार्थस्य साधनाय महदनर्थ-मनुतिष्ठति, तदा पापातिशयः । यदि तु महतः स्वार्थस्य साधनाय तदेवाकार्यं कुरुते, तदा तदपेक्षया न्यूनत्वं भवति पापस्य ।

यदि कश्चित् स्वार्थत्यागं विनैव परार्थं घटयति, तदा तस्य चरित्रोत्कर्षस्तावान्न भवति । यस्तु महान्तमपि स्वार्थं परित्यज्य परार्थं साधयति, तस्य महांश्चरित्रोत्कर्षः सम्पद्यते । एवं धनसंग्रहबुद्ध्या चौर्यादिप्रवृत्तस्य जनस्य कर्म आपत्काले स्वप्राणरक्षार्थं चौर्यादिप्रवृत्तस्य जनस्य कर्मापेक्षया जघन्यतरम् ।

तदेवमसत्कर्मणि महतः प्राणरक्षणादिरूपस्य स्वार्थस्य साधनाय क्रियमाणमसत्कर्म जघन्यम्, क्षुद्रस्य स्वार्थस्य साधनाय क्रियमाणं चासत्कर्म जघन्यतरमिति स्वार्थस्य मात्रया पापस्य तारतम्यावधारणम् । सत्कर्मणि च परार्थसाधनाय स्वल्पस्य स्वार्थस्य परित्यागो यशस्यः, महतश्च स्वार्थस्य परित्यागस्ततोऽपि प्रशस्यतर इति स्वार्थत्यागतार-तम्येन पुण्यस्य तारतम्यमिति सिद्धम् ॥



# षष्ठः परिच्छेदः

## बाह्यनियमाः

### सोपानत्रयम्

*म्यूरहेडमहोदयो नैतिकचेतनाया विकासस्य सोपानत्रयं निर्दिशति । प्रथमे सोपाने व्यवहारस्य नियामका बाह्या एव नियमा भवन्ति । मानवजातेर्विकासे विचारहीनैयमाद्याऽवस्था । तत्र हि समुदायादिनिर्धारिता नियमा एवाचारस्य साधुत्वासाधुत्वव्यवस्थापका भवन्ति । तदनन्तरं विकसिते विवेके बाह्यनियमानां स्थानेऽन्तःकरणस्य आन्तरिका नियमा आचारस्य नियामका जायन्ते । अस्यामवस्थायां बाह्यादेशापेक्षया आन्तरिकी प्रेरणैव आचारनियामिका पथप्रदर्शिका च सम्पद्यते । सोपानद्वयमपीदं वैधानिकनीतिशास्त्रस्य ( लीगल ऑर जूरल एथिक्स ) अङ्गभूतम् । तृतीयं च सोपानं हेतुवादिनीतिशास्त्रस्य ( टेलीओलॉजिकल एथिक्स ) अङ्गं भवति । वैधानिकनीतिशास्त्रे नियमानुसरणस्य प्राधान्यम् , नियमानुसारि कर्म सत्कर्म इत्युच्यते । हेतुवादिनीतिशास्त्रे चोद्देश्यस्य प्राधान्यम् , नियमस्तत्र साधनमात्रम् । एवं हि साधनसाध्यभूतयोर्नियमोद्देश्ययोः प्राधान्याप्राधान्यापेक्षया नीतिशास्त्रस्य वैधानिक(लीगल ऑर जूरल एथिक्स)–हेतुवादि( टेलीओलॉजिकल एथिक्स )भेदेन द्वैविध्यं भवति । तत्राद्यं सोपानद्वयं वैधानिकनीतिशास्त्रस्य तृतीयं च सोपानं हेतुवादिनीतिशास्त्रस्याङ्गम् ।

तदेवं नैतिकताया मानदण्डस्य विषये विविधा विचाराः । तत्र वैधानिकनीतिशास्त्रपक्षे आन्तरा बाह्या वा नियमा एव नैतिकताया नियामकाः । हेतुवादिनीतिशास्त्रपक्षे चात्मन उद्देश्यस्यैव नैतिकताया नियामकत्वम् । हेतुवादिपक्षेऽपि चात्मनः स्वरूपभेदाद् सुखवाद( हेडोनिज्म )-बुद्धिपरतावाद( रेशनलिज्म )-आत्मपूर्णतावादादि( एडमानिज्म )-भेदेन नैतिकमानदण्डस्य विषये विप्रतिपत्तयः । सुखवादिनश्चार्वाकादिवद् लौकिकमिन्द्रियतृप्तिजन्यं सुखमेवाचारस्य नियामकं मन्यन्ते । येन कर्मणा इन्द्रियाणां तृप्तिजनकं सुखमुत्पद्यते तदेव नैतिकं कर्म, तद्विपरीतं चानैतिकमिति तेषामभिप्रेतम् । तन्मते ऐन्द्रियकसुखजनकत्वमेव नैतिकत्वलक्षणम् । बुद्धिपरतावादिनश्च इन्द्रियदमनपूर्वकं शुद्धस्यात्मनः साक्षात्कारमेव नैतिकादर्शरूपं मन्यन्ते । आत्मपूर्णतावादिनां नये च बुद्धिसाहाय्येनेच्छाया इन्द्रियवृत्तीनां च निग्रहेणात्मनः पूर्णविकासात्मिका पूर्णताप्राप्तिरेव नैतिकताया व्यवस्थापिका । तदेतन्मतत्रयं विशिष्टं व्याख्यानमपेक्षते । तत्त्वग्रिमेषु परिच्छेदेषु यथाक्रमं विधास्यते ।

## बाह्यनियमस्य नैतिको मानदण्डः

किमपि कर्म स्वभावतः सदसद्वा न भवति। अवधारितस्य नियमस्यानुसरणेनैव तस्य सत्त्वमसत्त्वं वा भवति। यन्नियमानुसारि कर्म, तदेव सत्कर्म; तद्विपरीतं चासत्कर्मेति व्यवह्रियते। स च नियमः क्वचित् सामाजिकः, क्वचिद् राजकीयः, क्वचिच्चेश्वरीयो भवति। स च कदाचिद् दण्डभयेन कदाचिच्च पुरस्कारादिलोभेन पुरुषं प्रवर्तयति निवर्तयति वा। एवं बाह्यनियमस्य दण्डपुरस्कारादिहेतुकमेव नियामकत्वम्। इयं बलप्रयोगात्मिका नैतिकता न यथार्था नैतिकता। इच्छास्वातन्त्र्यं नीतिशास्त्रस्य मूलभूतम्। इच्छास्वातन्त्र्यमन्तरा बलप्रयोगेण क्रियमाणं कर्म नैतिकनिर्णयस्य विषय एव न भवति। ततश्च बाध्यता नैतिकतायाः परमार्थनैतिकतायाः प्रयोजिका न भवति। बाह्यनियमानां न स्वतः पुरुषार्थता, न च साध्यरूपता। साधनभूता एव ते। साध्यभूतश्च कश्चिदन्य एव महानुद्देश्यः। ततश्च स एव पुरुषार्थः। ततश्च बाह्यनियमानां न नैतिकतायां नियामकत्वम्, अपि तु तस्यैवोद्देश्यभूतस्य पुरुषार्थस्य नियामकत्वमिति तु मतान्तरम्।

### (क) समुदायनियमः (लॉ आफ दि ट्राइब)

अविकसितबुद्धीनां मानवानां समुदाये वर्गनायकस्याज्ञैव आचारस्य नियामिका भवति। नायकस्यादेश एव तदनुयायिनां कर्तव्यम्। स एव च नैतिको नियमः। स एव समुदायनियमपदेनोच्यते।

### (ख) समाजनियमः (सोशल लॉ)

विकसितबुद्धीनां मानवानां समुदायः 'समाज'पदवाच्यो भवति। तदन्तर्वर्तिनां जनानामनुमत्या येषां नियमानामवधारणं भवति, त एव समाजनियमा उच्यन्ते। पूर्वोक्ताः समुदायनियमा नायकस्येच्छामात्राधीना भवन्ति, समाजनियमाश्च समाजान्तःपातिनां जनानामनुमत्याऽवधारिता भवन्ति, न नायकादेशरूपा नायकेच्छामात्राधीना वेति समुदायनियमसमाजनियमयोर्भेदः। यथा समुदायनियमे नायकस्यादेश एव नैतिकतानिर्णायकस्तथा समाजनियमे समाजस्यादेश एव नैतिकतानियामकः। यत्कर्म समाजनियममनुसरति, तदेव सत्कर्म। तदुल्लङ्घनात्मकं तन्निषिद्धस्यानुष्ठानं चानैतिकमसत्कर्म भवति। जातिबहिष्कारादयश्च समाजनियमपरिपालने प्रयोजकाः। ततश्च नैतिकता हि सामाजिकी संस्था व्यवस्था वा, समाजशक्तेर्दण्डस्य च भयेन तत्संरक्षणं भवतीति श्रीबेनमहोदयः।

परं समाजनियमास्तु परिवर्तनशीला अस्थिराश्च भवन्ति। कालभेदेन देशभेदेन च बहुधा भिद्यन्ते। य एव सामाजिको नियमः कस्मिंश्चित्कालविशेषे प्रशंसार्हः, स एव कालान्तरे उपहासाय सम्पद्यते। एवं य एव नियम एकस्मिन् समाजे देशे वा प्रशंसार्हः, स एवापरस्मिन् समाजे देशे वा वचनीयतामुपसम्पद्यते। ततश्चाव्यवस्थितानामेषां समाजनियमानां नैतिकतायां व्यवस्थापकत्वं नोपपन्नम्। किञ्च, समाजनियमाः स्वतोऽपि नैतिकतानिर्णयस्य विषया भवन्ति। कश्चित् सामाजिको नियमविशेषः समीचीनोऽसमीचीनो वेति कस्यचिदादर्शविशेषस्यापेक्षया तेषामपि नैतिकनिर्णयविषयत्वात् तेषां नैतिकताव्यवस्थापकत्वं न सम्भवति।

## ( ग ) राज्यनियमः ( पोलिटिकल लॉ )

हॉब्स-वेनप्रभृतयस्तु राज्यादेशमेव नैतिकताया नियामकं मन्यन्ते । राज्यमेव नियमनिर्माणं करोति, तत्परिपालनं च कारयति । राज्यादिष्टं कर्मैव सत्, तन्निषिद्धं चासदेव भवति । सदसतोरवधारणे राज्यनियम एव परमो न्यायालय इति हॉब्समहोदयः ।

परं राज्यनियमा अपि साधनभूता एव, न तु साध्यभूताः । लोकहितस्य साधनमेव तेषां साध्यम् । लोकहितमुद्दिश्यैव राज्यनियमाः प्रवर्तन्त इति तत्साधनभूता एव । साधनात्मकत्वाच्च न तेषां नैतिकतायां नियामकत्वम्, साध्यस्यैव सर्वत्र नियामकत्वसम्भवात् । किञ्च, समाजनियमवत् परिवर्तनशीला देशकालादिभेदेन भिद्यन्ते राज्यनियमा अपि । ते मानवव्यवहारस्यैकदेशमात्रे सम्बद्धा भवन्ति, न तु कृत्स्नं व्यवहारं व्याप्नुवन्ति । मानसव्यापारस्य च स्मरणेऽपि ते न क्षमा इति न ते नैतिकनिर्णयस्य व्यवस्थापकाः । किञ्च, सामाजिकनियमवतोऽपि स्वतो नैतिकनिर्णयापेक्षा भवति । कश्चिद्राजनियमः समीचीनोऽपरश्चासमीचीन इति तेऽपि नैतिकनिर्णयस्य विषया भवन्ति । बलप्रयोगादिरूपो दोषोऽत्रापि सम्भवतीति च तस्य राज्यनियमस्यापि नैतिकतानियामकत्वं नोपपद्यते ।

## ( घ ) ईश्वरीयनियमः ( डिवाइन लॉ )

डेकार्ट-लॉक-पैलेप्रभृतयो विद्वांस ईश्वरीयनियममेव नैतिकं मानदण्डं मन्यन्ते, येन सर्वेषामपि कर्मणां साधुत्वासाधुत्वमवधार्यते । ईश्वरेणादिष्टं कर्मैव सत्कर्म, तेन निषिद्धं च कर्मासत्कर्म भवति । तत्रापि कर्मणां साधुत्वासाधुत्वं नेश्वरेच्छाप्रयोजकम्, अपि तु ईश्वरेच्छैव साधुत्वासाधुत्वप्रयोजिका । ईश्वरेच्छया सदप्यसत्, असच्चापि कर्म सद् भवति । अप्रतिहता ईश्वरेच्छैव कर्मणः साधुत्वमसाधुत्वं वा नियमयति, न तु कर्मणः स्वाभाविकं किञ्चित् साधुत्वमसाधुत्वं वाऽपेक्ष्य ईश्वरस्तं साधुत्वासाधुत्वं प्रयोजयति । नहि किञ्चित् कर्म स्वभावतोऽसद् भवतीति कृत्वा ईश्वरेण निषिद्ध्यते, अपि तु ईश्वरेण निषिद्धमिति हेतोस्तदसत्कर्मेति व्यवह्रियते । एवं कस्यचित् कर्मणः स्वाभाविकं साधुत्वमवलम्ब्य नहीश्वरस्तद् विधत्ते, अपि तु ईश्वरेण विहितत्वादेवास्य साधुत्वं भवति । ईश्वरश्च ऋषीणामन्तःकरणेषु स्वेच्छां प्रकाशयति । ते च वेदादिधर्मग्रन्थद्वारा तामीश्वरेच्छां लोके प्रकाशयन्ति । एवमीश्वरेच्छाया ज्ञानं वेदादिभ्यो धर्मग्रन्थेभ्य एव लोके जायते । डेकार्टमहोदयस्य मतेन न केवलं नैतिकतत्त्वानाम्, अपि तु तर्कगणितादिसर्वविद्यानां स्रष्टा प्रकाशकश्चेश्वर एव । ईश्वर एव सर्वासां विद्यानां प्रवर्तकः । लॉकमहोदयस्य मतेन च ईश्वरेच्छा ईश्वरीयनियमश्च नैतिकताया नियामकौ ।

अस्मिन् मते स्वेच्छाचारिशासक इवाप्रतिहतशक्तिरीश्वरो नैतिकत्वनिरपेक्ष एव भवति । यदि कर्मणः स्वरूपमनपेक्ष्य स्वेच्छया किमपि कर्म सदसद्वा उद्घोषयति, ततस्तस्येदं कर्म निरङ्कुशशासककर्मणो नातिरिच्यते । वस्तुतस्तु ईश्वर एव नैतिकताया आदर्शः । स स्वरूपतः सदेव कर्म सत्, स्वरूपतोऽसच्च कर्म असदिति निर्दिशति, न स्वेच्छामात्रात् । कर्मणः सदसत्त्वभेदो नित्यस्तत्स्वरूपमात्राश्रितो नेश्वरेच्छामात्राश्रितः । ईश्वरः प्रकृत्यैव नैतिकादर्शभूतो मङ्गलमयश्च । डेकार्टमहोदयोऽपि ईश्वरस्य पूर्णरूपतां प्रदर्शयति । लॉकमहोदयश्चेश्वरस्य सदात्मकतां ज्ञानरूपतां च स्वीकरोति ।

परमत्रेश्वरेच्छाया नियामकत्वेऽपि स्वर्गादौ पुरस्कारलोभेन नरकादौ दण्डभयेन च सदसतोः प्रवृत्तिनिवृत्ती भवत इति तुल्यं बलप्रयोज्यत्वं बाह्यनियमानाम्। न च बल-प्रयोज्यं कर्म नैतिकनिर्णयस्य विषय इति न बाह्यनियमानां नैतिकतायां नियामकत्वम्। ततश्चान्तरिकी प्रेरणैव तत्र नियामिकेति मतान्तरम्। अस्य मतस्य विवेचनमग्रे सहज-ज्ञानवादप्रकरणे काण्टमहोदयस्य बुद्धिपरतावादस्य च विवेचनकाले विधास्यते। तृतीय-सोपानस्य हेतुवादिनीतिशास्त्रस्य ( टेलिअोलॉजिकल एथिक्स ) सुखवाद( हेडोनिज्म )-बुद्धिपरतावादादयो ( रेशनलिज्म ) ये त्रयो भेदाः प्रदर्शिताः, ते यथाक्रममुत्तरेषु परिच्छेदेषु निरूप्यन्ते ॥



# सप्तमः परिच्छेदः

## सुखवादः

### सुखवादः, ( हैडोनिज्म )

सुखवादिनो हि सुखमेव नैतिकताया निकषं वदन्ति। 'दुःखादुद्विजते सर्वः सर्वस्य सुखमीप्सितम्' इति महाभारतेऽपि सुखमेव सर्वेषां जीवनोद्देश्यभूतं प्रतिपादितम्। ततश्च जीवनोद्देश्यरूपस्य परमनिःश्रेयसभूतस्य चास्य सुखस्य साधनीभूतं कर्म नैतिकं तद्विपरीतं चानैतिकं कर्मेति सुनिकषेणैव कर्मणो नैतिकत्वानैतिकत्वे साधुत्वासाधुत्वे चावधार्येते इति सुखवादिनामभिप्रायः। स चायं सुखवादो मनोवैज्ञानिको नैतिकश्चेति द्विविधः। मनोवैज्ञानिकसुखवादो हि सर्वस्य सुखमीप्सितमिति तथ्यनिरूपणमात्रं कुरुते। तदनुसारमिच्छायाः साधारणः स्वाभाविकश्च विषयः सुखमिति निगद्यते। नैतिकसुखवादे चेच्छाया आदर्शभूतो विषयः सुखम्। मनोवैज्ञानिके सुखवादे तथ्यमात्रनिरूपणं नैतिके सुखवादे चादर्शनिरूपणं प्राधान्येन भवतीति तयोर्भेदः।

बेन्थम-मिलप्रभृतयः सुखमेव कामनाविषयं मन्यन्ते। तन्मते सुखोत्पादकानि वस्तूनि सुखसाधनत्वेनैव काम्यानि, न तु वस्तूनां स्वतः कामनाविषयत्वम्। सुखस्य तु स्वत एव काम्यत्वम्। सुखवादोऽयं यां दार्शनिकीं सिद्धान्तशय्यामधिशेते, तत्र वासनामय इन्द्रियपरश्च आत्माऽभिमतः। बुद्धिश्च वासनानां सेविकैव, न तु पथप्रदर्शिका। वासनामयः पुरुष ऐन्द्रियकं सुखमभिलषति, बुद्धिश्च तदनुरूपाणि साधनान्यनुसन्धत्त इति ह्यूममहोदयो वासनासेविकामेव बुद्धिं मन्यते। ततश्च वासनामयस्यात्मनस्तृप्तिरात्मनो वासनानां वा तृप्तिरेव सुखम्। तस्य प्राप्तिर्दुःखादुपरतिश्च सर्वेषामभिमता। सुखाधिगमार्थं दुःखोपरमार्थमेव च सर्वोऽपि जीवव्यवहारः। येन कर्मणा सुखस्याधिगमो दुःखस्योपरमश्च भवति, तदेव नैतिकं साधु समीचीनं च कर्मेति सुखदुःखे एव नैतिकत्वनियामके। अत एव प्रकृतिर्हि मानवं प्रभुशक्तिसम्मितयोः सुखदुःखयोः साम्राज्येऽन्तराले वा स्थापितवतीति बेन्थममहोदयो ब्रवीति।

### मनोवैज्ञानिकः सुखवादः ( साइकोलॉजिकल हेडोनिज्म )

'दुःखादुद्विजते सर्वः सर्वस्य सुखमीप्सितम्' इत्यादिरूपेण तथ्यनिरूपणमेव मनोवैज्ञानिकसुखवादस्य स्वरूपम्। तदनुसारं च सुखमेवेच्छायाः स्वाभाविकः साधारणश्च विषयः। परे तु मनोवैज्ञानिकं सुखवादमिमं मनोवैज्ञानिकमेवामनन्ति। तदनुसारं सुखसाधनान्येव प्रार्थ्यते जनो न तु सुखम्। बुभुक्षितः पुरुषो भोजनं याचते, कृते च भोजने या तृप्तिरुपजायते, सैव सुखपदवाच्या भवति। ततश्च साधनविषयिणीच्छा, न तु सुखविषयिणी। इच्छापूर्त्या तृप्तिश्च फलरूपा सुखमिति गीयते। सुखानुभूतौ पूर्वम् १. अभीष्टस्य

कस्यचिद् वस्तुन इच्छा, २. ततोऽभीष्टप्राप्तिः, ३. ततश्च तृप्तिरुत्पद्यत इति मनोवैज्ञानिकः क्रमः। पूर्वं बुभुक्षा, ततो भोजनमथ तृप्तिः। तृप्तेः पूर्ववर्तिनी नियमत इच्छा, इच्छाविषयश्च तृप्तिसाधनम्, तज्जन्या तृप्तिश्च सुखमिति बटलरमहोदयः। ये तु सुखवादिनः सुखमेवेच्छाविषयं मन्यन्ते, ते तु सुखतत्साधनयोर्भेदं नाकलयन्ति। सुखशब्दो सुखे (प्लेजर), तत्साधने (आब्जेक्ट ऑफ प्लेजर) चोभयत्रापि प्रयुज्यते। तत्र कामनाविषयाभिधायी सुखशब्दः सुखसाधनान्येव प्रथमं परामृशति, तदधीनत्वात् सुखस्य। ततश्च सुखमेव साक्षादिच्छाविषय इति मनोवैज्ञानिकसुखवादोऽमनोवैज्ञानिक एव। नैतिकसुखवादस्तु मनुष्येण सुखमनुसन्धेयमित्यादर्शरूपेण सुखं परामृशति।

## सुखवादे विरोधाभासः (पैरोडाक्स ऑफ हैडोनिज्म)

सुखानुसन्धानेन सुखं नोपलभ्यते। इच्छायाः प्राबल्यं सुखस्य दौर्लभ्यं प्रदर्शयति। यथा यथा प्रवर्धते सुखेच्छा, तथा तथा दुर्लभतामेति सुखमपि। तदुपेक्षायां तु स्वत एवानुवर्तते छायावत् सुखम्। सुखेच्छायाः प्राबल्यं न सुखाधिगमे प्रयोजकम्, अपि तु तत्रापेक्षिकमौदासीन्यमेव प्रयोजकम्। यत् किमपि सुखं प्रार्थ्यते जनस्तद्विस्मरणं सुखमुत्कर्षसन्निधिं च नयति। तदनुसन्धानातिशयश्च तस्य दुर्लभतां मात्रापकर्षं च प्रयोजयतीति सिजविकमहोदयेन सुखवादस्य विरोधाभासः प्रदर्शितः। परं नायं व्यापको नियमः। प्रायशस्तु लिप्सातिशयेन अनुसन्धीयमानेषु सुखेष्वस्य तथ्यताऽनुभूयते। नाटकदर्शनजन्यं सुखमभिलक्ष्य यदि सुखानुसन्धानप्रवणतया नाटकावलोकनं क्रियेत, तर्हि दूरापास्तैव नितरां तदनुभूतिः। नाटकावलोकनप्रवणतया च क्रियमाणे तदवलोकने ध्रुवमेव तदनुभवसुखमिति। तथापि तदपवादानामपि सम्भवान्नायं व्यापको नियमः।

## सुखवादस्य द्वैविध्यम्

पूर्वं मनोवैज्ञानिक-नैतिकभेदाभ्यां सुखवादस्य द्वैविध्यं प्रदर्शितम्। कालभेदेनापि नव्य-प्राचीनरूपेण सुखवादस्य द्वैविध्यं दृश्यते। यूनानदेशस्य सिरैनिक-सम्प्रदायानुयायिनः, ऐपीक्यूरियन-सम्प्रदायवादिनश्च प्राचीनसुखवादस्य प्रवर्तकाः। आधुनिका बेन्थम-मिलप्रभृतयो नव्यस्य सुखवादस्य आचार्याः। प्राचीनः सुखवादसिद्धान्तः 'स्वार्थमूलकः सुखवादः' इत्यपि व्यवह्रियते। तत्रापि सिरैनिकसम्प्रदाय एपीक्यूरियनसम्प्रदायश्चेति द्वौ भेदौ। सिरैनिकसम्प्रदायस्य प्रवर्तकः अरिस्टिपसमहोदयश्चार्वाकवद् ऐन्द्रियकस्य वैयक्तिकसुखस्यानुसन्धाता प्रचारकश्चासीत्। तन्मते सर्वमपि सुखं सजातीयम्, केवलं मात्रापरिमाणेन (डिग्री), सत्ताकालभेदेन (ड्यूरेशन) च भिद्यते। न तु तत्र गुणात्मको भेदः (क्वालीटेटिव डिफरेन्स) कश्चिदस्ति। शारीरिकं सुखमाध्यात्मिकसुखापेक्षया तीव्रानुभूतिविषयत्वाद् वरणीयम्। अतीतस्तु कालः पलायितो मृतो वा, अनागतश्च संशयापन्न इत्युपेक्षणीयावेवैतौ। केवलं वर्तमान एवोपभोग्यः कालः। तस्य सर्वात्मनोपभोगः कार्यः। तीव्रतमशारीरिकसुखानुभूतितत्परैरेव कालस्यास्यावन्ध्यता साफल्यं च कर्तुं शक्यत इति निरन्तरं तत्प्रवणतया भोगविलासतत्परैर्भाव्यम्। 'ईट ड्रिंक एण्ड बी मैरी' अयमेव तेषां जीवनस्य मूलमन्त्रः। अरिस्टिपसमहोदयस्यायं सिद्धान्तः स्वार्थमूलकः

सुखवादः ( ईगोइस्टिक हैडोनिज्म ), तत्रापि च स्थूलो वैयक्तिकः सुखवाद इत्यभिधीयते। अस्य सिद्धान्तस्य प्रवर्तकः अरिस्टिपसमहोदयो यूनानदेशस्य सिरीनाख्यपत्तनस्याभिजन आसीदिति। तदीयः सम्प्रदायः 'सिरैनिक' सम्प्रदाय इत्यपि व्यवह्रियते। हॉब्समहोदयोऽपि सर्वानपि चरित्रगुणानात्मप्रेममूलकत्वेन विश्लेषयति। तदनुसारं स्वभावतः स्वार्थपरायणो मानवः। तस्योच्चतरा भावना अपि स्वात्मस्नेहोद्भूता एव, उच्चतराण्यपि च कर्माणि स्वात्मस्नेहस्य ( सेल्फ लव ) अभिव्यञ्जकान्येव। मैण्डेविले-हल्वेशियनमहोदयावपि सिरैनिकमतानुयायिनावेव। तयोर्मते लौकिकमाधिभौतिकमिन्द्रियतृप्तिजन्यं सुखमेवाभिलषणीयम्, तस्यैवाधिमात्रमनुभूतिः परममङ्गलरूपा जीवनोद्देश्यभूता च। अयं हि सिरैनिकसम्प्रदायो भारतीयचार्वाकसम्प्रदायानुरूपः।

## परिष्कृतः स्वार्थसुखवादः ( रिफाइण्ड ईगोइज्म )

प्राचीनसुखवादस्यैव द्वितीयः सम्प्रदाय एपीक्यूरसमहोदयेन प्रवर्तितः 'ऐपीक्यूरियन'-सम्प्रदाय इत्यभिधीयते ( ३४१—२६० ई० पू० )। ऐपीक्यूरसमहोदयेन सिरैनिक-सम्प्रदायस्य स्थूलो वैयक्तिकसुखवादो मात्रया परिष्कृतः। तन्मते सुखस्य जीवनोद्देश्यत्वेऽपि तात्कालिकं क्षणिकं च सुखं न जीवनोद्देश्यभूतम्, किन्तु स्थिरं सुखमयं जीवनमेव काम्यम्। बुद्धेः साहाय्येनैव च तादृशस्य सुखमयजीवनस्याधिगमः। भौतिकसुखापेक्षया बौद्धिकसुखस्यैव तन्मते प्राधान्यम्। बौद्धिकं सुखमैन्द्रियकसुखापेक्षया चिरस्थायि दुःखेनासंभिन्नं च भवतीति तदेवाभिलषणीयम्। सुखशब्दश्चात्र दुःखाभावपरोऽभिमतः। यथा भारतीये दर्शने नैयायिका दुःखाभावस्वरूपमेवापवर्गं मन्यन्ते, तथा एपीक्यूरियन-सम्प्रदायानुयायिनोऽपि दुःखाभावात्मकमेव सुखं निःश्रेयसमङ्गीकुर्वन्ति। तदधिगमोपायश्च औदासीन्यापरपर्यायं वैराग्यमेव। सुखं दुःखं च प्रति औदासीन्यावलम्बनेनात्मनि तादृशी शान्तिरुद्भवति, या न केनापि सुखान्तरेणातिशय्यते, न च केनाप्यपनीयते। भावात्मकसुखापेक्षया विषयभोगजन्यसुखापेक्षया वा औदासीन्यभावनाजन्येयं शान्तिरेवाभिलषणीया, सर्वेषां जीवनोद्देश्यभूता चेति ऐपीक्यूरसमहोदयस्य सिद्धान्तः। स चायं सिद्धान्तः 'परिष्कृतः स्वार्थसुखवादः' ( रिफाइण्ड ईगोइज्म ) इत्यभिधीयते।

## तदालोचनम्

एवमनयोरुभयोरपि प्राचीनमतयोः स्वार्थसुखवाद एव नैतिकताया मानदण्डोऽभिप्रेतः। परं 'भिन्नरुचिर्हि लोकः' इत्यभियुक्तोक्तेर्यदेकस्य सुखं तदेवापरस्य दुःखमिति नायं समानो मानदण्डः। नानुपहत्य भूतान्युपभोगः सम्भवतीति यदेवैकस्य सुखकरं कर्म, तदेवापरस्य दुःखजनकमित्यंशाभ्यामुभयत आकृष्यमाणमिदं नैतिकमनैतिकं किमपि न स्यात्। किञ्च, स्वार्थभावनावत् परार्थभावनाऽपि स्वाभाविकी केषाञ्चिद् भवति। स्वार्थप्रवणो यथा स्वार्थसाधने सुखमनुभवति, तथा परोपकारपरायणानां परोपकारसाधनमेव सुखम्। आत्मोत्सर्गोऽप्यात्मरक्षणवन्नैसर्गिक एव। अतः सिरैनिकाभिमतः स्थूलः स्वार्थसुखवादो न नैतिकताया मानदण्डः। ऐपीक्यूरसमहोदयाभिमते परिष्कृतस्वार्थसुखवादे च दुःखाभावात्मकत्वादुद्देश्यस्य सक्रियजीवनस्याभावः प्रसज्यत इति नायमपि समीचीनः। किञ्च, वैयक्तिकं सुखं परं निःश्रेयसपदं नाधिगच्छतीति न स्वार्थसुखवादपक्षः समीचीनः।

## परार्थसुखवादः ( एल्ट्रूइस्टिक हैडोनिज्म )

परार्थसुखवादः सुखवादस्य नूतनः सम्प्रदायः। अयं सिद्धान्तः 'उपयोगितावादः' ( यूटीलिटेरियनिज्म ) इत्यप्यभिधीयते। यथा प्राचीनस्य स्वार्थसुखवादस्य स्थूलस्वार्थसुखवादः ( ग्रास ईगोइज्म ) परिष्कृतस्वार्थसुखवादश्च ( रिफाइण्ड ईगोइज्म ) इति द्वौ भेदौ, तथा नव्ये परार्थसुखवादेऽपि स्थूलोपयोगितावादः ( ग्रास यूटीलिटेरियनिज्म ) परिष्कृतोपयोगितावादश्च ( रिफाइण्ड यूटीलिटेरियनिज्म ) इति द्वौ भेदौ। तत्र स्थूलोपयोगितावादस्य संस्थापको बेन्थममहोदयः, परिष्कृतोपयोगितावादस्य च मिलमहोदयः। अस्मिन् परार्थसुखवादेऽधिकस्याधिकं सुखमेव ( ग्रेटेस्ट हैपीनेस ऑफ दि ग्रेटेस्ट नम्बर ) नैतिकतावधारणे मूलम्। समष्टिसुखस्य साधकत्वे समष्टिदुःखनिरासकत्वे च उपयोगित्वानुपयोगित्वाभ्यामेवात्र कर्मणः साधुत्वासाधुत्वे अवधार्येते, इत्यस्मादेव हेतोर्नव्योऽयं परार्थसुखवादः 'उपयोगितावाद' इति नाम्नाऽपि व्यवह्रियते। तत्र स्थूलोपयोगितावादी बेन्थममहोदयः सर्वेषां सुखानां साजात्यं तेषां परिमाणमात्रकृतमन्तरं च स्वीकरोति, न तु सुखानां गुणकृतं ( क्वालिटेटिव ) भेदमङ्गीकरोति। तन्मते परिमाणसाम्ये सति सूचिव्यतिकरभवं काव्यास्वादजन्यं च सुखं तुल्यमेव ( क्वाण्टिटी ब्रिंग दि सेम, पुष्पिन इज एज गुड एज पोइट्री )। अत एवास्योपयोगितावाद ऐन्द्रियक एव। परिष्कृतोपयोगितावादी मिलमहोदयश्च सुखानां न केवलं परिमाणकृतम् ( क्वाण्टीटेटिव ), किन्तु गुणकृतं ( क्वालिटेटिव ) भेदमप्यङ्गीकरोति।

बेन्थममहोदयस्य मते तु केवलं परिमाणकृतमन्तरमेव सुखानां विभेदकम्। परिमाणसाम्ये तु सर्वमपि सुखं सजातीयमेव, न तु तत्र गुणकृतं किञ्चिदपि वैषम्यम्। परं परिमाणकृतमपि वैजात्यं नैकधा भवति। तत्र १. तीव्रता ( इण्टैन्सिटी ), २. सत्ताकालः ( ड्यूरेशन ), ३. निकटता ( प्राक्सिमिटी ), ४. असन्दिग्धता ( सर्टिनिटी ), ५. शुद्धता ( प्योरिटी ), ६. उत्पादकता ( फैकण्डिटी ), ७. व्यापकता ( एक्स्टैन्सिटी ) चेति सप्त सुखानां तारतम्यप्रयोजका हेतवो बेन्थममहोदयस्याभिमताः।

१. प्रकारान्तरेण सुखान्तरसजातीयमपि तीव्रतयाऽनुभूयमानं सुखं सुखान्तरापेक्षयाऽभिलषणीयतरं भवति। तत्र सुखस्य तीव्रतैव ( इण्टैन्सिटी ) सुखान्तरापेक्षया तस्योत्कर्षाधायिकेति तीव्रतयाऽपि सुखयोस्तारतम्यमवधार्यते।

२. एवं सत्ताकालोऽपि ( ड्यूरेशन ) तारतम्यावधारणे हेतुर्भवति। सजातीययोरपि द्वयोः सुखयोर्मध्ये तदेव सुखमधिकमुपादेयं भवति, यत् सुखान्तरापेक्षया चिरस्थायि।

३. एवं च नैकट्यमपि भवति सुखयोस्तारतम्याधायकम्। प्रकारान्तरेण सजातीययोः सुखयोर्यदेव भवति निकटस्थं ( प्राक्सिमिटी ) सुखम्, तदेव दूरवर्तिसुखापेक्षयाधिकं स्पृहणीयं भवति। ततो निकटताऽपि सुखयोस्तारतम्यप्रयोजिका।

४. असन्दिग्धता ( सर्टिनिटी ) च भवति तुरीयं तारतम्यनिमित्तम्। सन्दिग्धसुखापेक्षया असन्दिग्धं सुखं सदैवाधिकं स्पृहणीयं भवति। ततश्चासन्दिग्धताऽपि सुखयोस्तारतम्यनियामिकाऽभ्युपगम्यते।

५. सुखस्य शुद्धताऽपि ( प्योरिटी ) सुखान्तरापेक्षया तस्य स्पृहणीयतामापादयति। शुद्धताशब्दश्चात्र दुःखासंभिन्नत्वमात्रद्योतकः, न तु गुणाधानकृतस्य वैशिष्ट्यस्य वाचकः, बेन्थममहोदयस्य मते गुणकृतस्य ( क्वालिटेटिव ) भेदस्यानङ्गीकारात्। दुःखेनासंभिन्नं सुखं दुःखभिन्नसुखान्तरापेक्षयाऽधिकं कमनीयं भवति। तस्माद्दुःखासंभिन्नतापरपर्याया शुद्धताऽपि ( प्योरिटी ) सुखयोस्तारतम्यप्रयोजिका।

६. उत्पादकता ( फैकण्डिटी ) च भवति षष्ठं तारतम्यनिमित्तम्। यत् सुखं सुखान्तरस्योत्पादने साधनमपि भवति, तदेवोत्पादकं सुखम्। तच्चानुत्पादकसुखान्तरापेक्षया स्पृहणीयतरम्। एकेनैवोत्पादकेन सुखेन सुखान्तरस्याप्यधिगमसम्भवे कस्य वा सुखार्थिनस्तत्र न स्यात् साधीयसी प्रवृत्तिरित्युत्पादकताऽपि सुखानामुपादेयतातारतम्यं करोति।

७. व्यापकता ( एस्टेन्सिटी ) च भवति सप्तमं तारतम्यप्रयोजकं निमित्तम्। किञ्चित् सुखं स्वल्पजनसंवेद्यं किञ्चिच्च बहुजनसंवेद्यं भवति। तत्र बहुजनसंवेद्यं व्यापकं सुखमल्पजनसंवेद्यादव्यापकसुखादधिकमुपादेयम्। विशेषतश्चाधिकस्याधिकं सुखमिति वदतामुपयोगितावादिनां नये।

एषु यदेतद् व्यापकताख्यं सप्तमं सुखानां तारतम्यप्रयोजकं निमित्तम्, तन्मुखेनैव बेन्थममहोदयस्य सुखवादे परार्थतायाः प्रवेशो भवति। इतरथा तु मानवः प्रकृत्या स्वार्थपरायण एव। बेन्थममहोदयेन च मानवस्वभावस्येयं नैसर्गिकी स्वार्थपरताऽभ्यावृत्त्या प्रतिपादिता। 'बहुजनहिताय बहुजनसुखाय' इति परार्थसुखवादस्य मूलमन्त्रः। स च सुखस्य व्यापकतया तारतम्यमङ्गीकुर्वता बेन्थममहोदयेनाभ्युपगत एवेति तदीयः सुखवादः परार्थसुखवाद एव। पुरुषस्य नैसर्गिकी स्वार्थपरता कथङ्कारं परार्थप्रवृत्त्यभ्युपायतां प्रतिपद्यत इत्यत्र बेन्थममहोदयेन प्राकृतिक-राजनीतिक-सामाजिक-धार्मिकभेदैश्चतुर्विधा बाह्या आदेशाः प्रयोजकत्वेन निर्दिष्टाः।

तत्र प्रथमः प्राकृतिक आदेशः। काले हितमितभोजी एव स्वस्थो भवति। ये त्वप्रमाणतो भुञ्जते, ते रोगानीकस्य मूलमजीर्णं प्राप्नुवन्ति। एष प्राकृतिको नियमः। ततश्च समुपस्थिते प्रमाणाधिके स्वादुभोजने पुरुषोऽमितमेव भुङ्क्ते। न तु शक्नोत्यपरिमितं भोक्तुम्, न च पर्युषितं भोक्तुमिति परेभ्यो वितरति। एवं प्राकृतिक आदेशः स्वार्थपरायणेऽपि पुरुषे परार्थभावनामुत्पादयति।

राजादेशोऽपि स्वार्थसंयमकरो द्वितीयो हेतुः। राजादेश एव बलवद्भ्यो दुर्बलान् धनपतिभ्यश्च निर्धनान् त्रायते। इतरथा हि प्रवर्तेत मात्स्यन्यायः। राजादेशो दण्डभयेन स्वार्थपरेऽपि मानवे परार्थभावनामुद्भावयति। एवं सामाजिकबहिष्कारादिभयेन समाजादेशोऽपि स्वार्थिनो जनान् परार्थप्रवणान् करोति। चतुर्थश्च धार्मिकादेशः स्वर्गादिप्रलोभनेन नरकादिभयेन वा स्वभावतः स्वार्थसाधनप्रश्रिलानपि पुरुषान् परार्थसाधने प्रगुणीकरोतीत्येतेषां चतुर्णां बाह्यादेशानां प्रभावेण नैसर्गिकी स्वार्थपरता परार्थमुपसंक्रामतीति बेन्थममहोदयस्याभिप्रायः।

बेन्थममहोदयेन परार्थतोद्भावका य एते चतुर्विधा बाह्या आदेशा निर्दिष्टाः, त एव परमार्थतस्तस्य परार्थसुखवादस्य विरोधिनः। बेन्थममहोदयस्य परार्थसुखवादोऽपि मनोवैज्ञानिकसुखवादरूप एव। मनोवैज्ञानिकसुखवादश्च मुख्यतो वृत्तनिरूपणमात्रपरः, 'सर्वस्य सुखमीप्सितम्' इति वृत्तमात्रं निरूपयति। तद्वदेव परार्थसुखवादस्य मनोवैज्ञानिक-परार्थसुखवादरूपत्वे सर्वः परार्थमिच्छतीत्यभिहितं स्यात्। न चेदं तथ्यम्, स्वार्थप्रवणत्वा-न्मानवस्वभावस्य। परार्थश्चेत् स्वार्थादभिमततरो हन्त बलवत्प्रेरका इमे बाह्या आदेशा व्यर्था एवेति तदङ्गीकार एव परार्थस्याभिमतत्वाभावं गमयति। सुखवादोक्ता अन्येऽपि दोषाः परार्थसुखवादे तुल्याः।

## मिलमहोदयस्य परिष्कृतः परार्थसुखवादः
## ( रिफाइण्ड यूटीलिटेरियनिज्म )

जे० एस० मिलमहोदयः ( १८०६–१८७३ ई० ) उपयोगितावादिनां प्रमुख आचार्यः। सोऽपि बेन्थममहोदयनिर्दिष्टां ( १७४८—१८३२ ई० ) सरणिमवलम्ब्य बहुजनहिताय बहुजनसुखाय सम्पद्यमानं कर्मैव सत्कर्मेति निर्दिशति। सत्कर्मणो निर्णये बहुजनसुखमेव निकषम्। सर्वोऽपि जनो यावच्छक्यं स्वसुखायैव प्रयतते, एतदेव बहुजन-सुखस्य काम्यत्वे मानमिति चात्र तस्य वाचोयुक्तिः। ( नो रीजन कैन बी गिवन ह्वाई दि जनरल हैपीनेस इज डिजायरेबिल, एक्सेप्ट दैट इच पर्सन सो फार एज ही बिलीव्स इट टु बी अटेनेबिल, डिजायर्स हिज ओन हैपीनेस. दि हाउएवर बीग ए फैक्ट वी हैव नाट ओ ली आल दि प्रूफ्स ह्विच दि केस एडमिट्स आफ, बट आल ह्विच् इट इज पासिबिल टु रिक्वायर. दैट हैपीनेस इज गुड टु दैट पर्सन एण्ड दि जनरल हैपीनेस देअर फोर ए गुड टु एग्रीगेट आफ आल पर्सन्स. यूटीलिटेरियनिज्म )।

अत्र हि प्रातिस्विकसुखस्य काम्यत्वं सर्वजनसुखस्य काम्यत्वे लिङ्गम्। 'बहुजनसुखं काम्यं प्रातिस्विकसुखस्य काम्यत्वात्' इति चात्र भवत्यनुमानप्रकारः। स च बहुदोषग्रस्तः। पाश्चात्त्यन्यायप्रक्रियया यत्र ह्येकस्मिन् वाक्ये व्यष्टिबोधकस्य शब्दस्य वाक्यान्तरे समष्टिबोधकमर्थं गृहीत्वा किञ्चित् साध्यते, तत्र संकलनहेत्वाभासो ( फैलेसी आफ कम्पोजीशन ) नाम दोषो भवति। अत्र च 'सर्वः स्वसुखमभीप्सति, ( तस्मात् इति हेतुना ) 'सर्वः सर्वस्य सुखमभीप्सति' इति मिलमहोदयस्य साधनप्रकारः। तत्र पूर्वस्मिन् वाक्ये सर्वशब्दो व्यष्टिमात्रपरः, 'सर्वः स्वसुखमभीप्सति' इत्यनेन वाक्येन प्रत्येकं जनः स्वसुखम-भिलषतीत्येवाभिप्रेतम्। ततश्चात्र सर्वशब्दो व्यष्टिमात्रस्य बोधकः। उत्तरस्मिंश्च 'तस्मात् सर्वः सर्वस्य सुखमभीप्सति' इत्यस्मिन् वाक्ये सर्वशब्दः समष्टिपरः। एकत्र व्यष्ट्यर्थे प्रयुक्तस्य शब्दस्य परत्र समष्ट्यर्थमभ्युपेत्यात्र सर्वजनसुखस्य अभीप्सितत्वं साध्यते। अयमेव संकलनहेत्वाभास ( फैलेसी आफ कम्पोजीशन ) उच्यते। ततश्च संकलनहेत्वाभासरूपदोष-ग्रस्तत्वादत्र साध्याप्रसिद्धिः। तद्व्यतिरेकेण च 'सर्वस्य सुखं सर्वेषामभीप्सित-मिति, तस्मात् सर्वेषां सुखं सर्वस्याभीप्सितम्' इत्यनुमाने च पूर्वस्मिन् वाक्ये

सर्वस्य सुखमित्यत्र सर्वशब्दः समष्टिवचनः। उत्तरस्मिंश्च वाक्ये सर्वस्याभीप्सितमित्यत्र सर्वशब्दो व्यष्टिवचनः। एवमेकत्र समष्टिवाचकस्य सर्वशब्दस्य परत्र व्यष्टिवाचकत्वमभ्युपेत्य यदत्र समष्टिसुखस्य सर्वजनाभीप्सितत्वं साध्यते, तत्र व्यवकलनदोषग्रस्तत्वाद् (फैलेसी आफ डिवीजन) व्यवकलनहेत्वाभासः।

'एकत्र व्यष्टिबोधकस्यापरत्र समष्टिबोधकत्वं प्रकल्प्य निष्कर्षसाधने संकलनहेत्वाभासः (फैलिसी आफ कम्पोजीशन), एकत्र समष्टिबोधकस्य शब्दस्यान्यत्र व्यष्टिबोधकत्वमभ्युपेत्य च पदार्थसाधने व्यवकलनहेत्वाभासः (फैलिसी आफ डिवीजन) भवति' इति पाश्चात्त्यतर्कशास्त्रस्य सिद्धान्तः। ततश्चोभयदोषग्रस्तत्वाद् मिलमहोदयस्य प्रक्रिया न स्वसाध्यं साधयितुं क्षमते। अस्मत्प्रक्रियायां च 'सर्वजनसुखं सर्वजनकाम्यं प्रातिस्विकसुखस्य सर्वजनकाम्यत्वात्' इत्यस्मिन् अनुमानवाक्ये सर्वजनसुखम्, समष्टिसुखं पक्षः, सर्वजनकाम्यमिति सर्वव्यक्तिकाम्यत्वं साध्यम्, प्रातिस्विकसुखस्य सर्वजनकाम्यत्वं हेतुः। न च प्रातिस्विकसुखस्य प्रतिव्यक्तिकाम्यत्वरूपस्य हेतोः सर्वजनसुखस्य समष्टिसुखस्य प्रतिव्यक्तिकाम्यत्वेन सह कश्चिद् व्याप्तिरूपः सम्बन्धः। तस्माद् व्यष्टिसुखस्य काम्यत्वेन समष्टिसुखस्य काम्यत्वं व्याप्त्याद्यभावान्न सिद्धयति।

### सुखस्य गुणकृता भेदाः

सुखानां गुणकृतस्य भेदस्य प्रतिपादनं प्रथमतो मिलमहोदयेनैव कृतम्। पूर्वं हि बेन्थमप्रभृतय आचार्या तीव्रत्वाद्यात्मकं परिमाणकृतं सुखतारतम्यमङ्गीकुर्वन्तोऽपि सुखानां सर्वेषां साजात्यमेव प्रतिपादयन्ति, न तु गुणकृतं वैजात्यम्। तथा च परिमाणसाम्ये सूचिव्यतिकरभवस्य सुखस्य काव्यास्वादसुखस्य च साम्यं बेन्थममहोदयेन स्फुटमेवं प्रतिपादितम्। एपीक्यूरसमहोदयेन शारीरमानससुखयोर्भेदमुपदर्शयताऽपि चिरस्थायित्वादिनिमित्तक एवानयोर्भेदोऽङ्गीकृतो न तु गुणकृतो (क्वालिटेटिव) भेदोऽङ्गीकृतः। सर्वतः प्राग् मिलमहोदयेनैव पदार्थान्तरेषु गुणकृते परिमाणकृते चोभयात्मकेऽपि भेदेऽङ्गीक्रियमाणे सुखानां गुणकृतस्य भेदस्यानङ्गीकरणमयौक्तिकमिति वदता स्फुट एव गुणकृतो भेदोऽपि स्वीकृतः। कामोपभोगजन्यादैन्द्रियकात् सुखादुच्चतरमनोवृत्तिसमुद्भूतं सुखमुत्कृष्टतरमित्यस्य उपयोगितावादेन सह न कश्चिद् विरोध इति प्रतिपादयता च तेन यद्यपि तयोरविरोधोपपादनाय प्रयतितम्, तथाप्यनेनैव प्रच्छन्नद्वारेण सुखवादे बुद्धिपरतावादस्य (रेशनलिज्म) प्रवेशः संवृत्तः। बौद्धिकं सुखमिन्द्रियतृप्तिमात्रोद्भूतात् पाशविकसुखादुत्कृष्टतरमित्यत्र तीव्रतादिव्यतिरिक्तं किञ्चिन्निमित्तान्तरं तस्योत्कर्षाधायकमङ्गीकृतं चेत् ततः सुखव्यतिरिक्तं तत् तत्त्वान्तरं कर्मणां सदसत्त्वावधारणे निकषतामापद्यत इति न सुखमात्रस्य तत्र नियामकत्वमित्यापतितम्। किञ्च, गुणानां परीक्षायां किं मानमित्यत्र सहृदयानां योग्यनिर्णायकानामनुभव एव शरणमिति वदता च तेन बुद्धिपरतावादस्य संपोषणोऽपि विहित एव। येन विवेचकेन बौद्धिकमैन्द्रियकं चोभयात्मकं सुखमनुभूतं स अवश्यमेव बौद्धिकं सुखमेव श्रेयस्करं मनुते। न च योग्यनिर्णायकानां निर्णयः स्वेच्छामात्रप्रवृत्तः, किन्तु विवेकप्रेरित इति तादृशे निर्णये बुद्धिप्रयोगस्यानिनार्यत्वात् सुखवादे बुद्धिपरतावादस्य (रेशनलिज्म) प्रवेशो परिहार्यः। ततश्च मिलमहोदयेन स्वत एव सुखवादे (रेशनलिज्म) बुद्धिपरतावादोऽपि प्रकारान्तरेण समावेशितः।

सहृदयानां योग्यनिर्णायकानामैन्द्रियकसुखापेक्षया बौद्धिकसुखविषयके बहुमाने किं मूलमित्यनुयोगे मानवस्वभावस्य नैसर्गिकीं महत्त्वाकाङ्क्षामेव हेतुत्वेन निर्दिशति मिलमहोदयः। सन्तुष्टशूकरापेक्षया अतृप्तमानवरूपाय, तृप्तमूर्खापेक्षया चातृप्तविपश्चिद्रूपायाधिकं स्पृहयते सर्वोऽपि मानवः। ततश्च महत्त्वपदे नैसर्गिकी या मानवाकाङ्क्षा, सैवेन्द्रियतृप्तिजन्यपाशवसुखापेक्षया बौद्धिकसुखविषयके बहुमाने निमित्तम्। न चेयं महत्त्वभावना इन्द्रियानुभवमात्रहेतुकी, किन्तु बुद्धिव्यापारापेक्षिण्येवेत्यमुनाऽपि द्वारेण मिलमहोदयस्योपयोगितावादे बुद्धिपरतावादोऽनुप्रविष्ट एव।

## सहानुभूतेरुद्भवो नैतिकादेशश्च

स्वार्थपरायणस्यापि मानवस्य परार्थसाधने कथमभिरुचिः प्रवृत्तिश्च जायेते इत्यत्र बेन्थममहोदयेन चतुर्विधा बाह्या आदेशा हेतुतया निर्दिष्टाः। परं प्राकृतिक-राजनैतिक-सामाजिक-धार्मिकरूपेषु बाह्यादेशेषु स्वार्थमूलक एव बहुमानो लोकस्येति मिलमहोदयेन पञ्चमो नैतिकादेशोऽपि विनियोजितः। स च (इण्टर्नल सैंक्शन) आन्तरिक आदेशः सहानुभूत्यात्मको मानवमात्रस्य शिवानुध्यानरूपः। स्वार्थपरायणोऽपि मानवः कदाचित् परपीडामवलोक्य स्वयमपि पीडामनुभवति। आदौ तामेव स्ववेदनामपहर्तुं स परवेदनापहारे प्रवर्तते। तत्र परवेदनापहरणं साधनमात्रम्, साध्यस्तु स्ववेदनापहार एव। एवं स्वार्थायैवादौ परार्थप्रवृत्तिः। ततश्चाभ्यावृत्त्यास्य क्रमस्य रुचिः साध्यात् साधनमनुसंक्रामति। स्वार्थरूपं साध्यं विहाय साधनरूपे परार्थमात्रेऽधिकमभिरमते मानवीयं चेतः। एवं साध्यात् साधने रुचिसंक्रमणमेव सहानुभूतेः स्वरूपम्। सा च सहानुभूतिः स्वजीवनोपार्जितैव भवतीति मिलमहोदयस्य सिद्धान्तः। परमत्रापि मिलमहोदयस्य सिद्धान्तो न समीचीनः। स्वार्थः परार्थश्चोभावपि मानवस्वभावस्य अङ्गभूतौ। न केवलं मानव एव, किन्तु तिर्यञ्चोऽपि परार्थमनुरुन्धन्ते। गावोऽपि वत्सस्य रक्षणायात्मनो जीवनमर्पयन्ति, सिंहादयः श्वापदा अपि स्वापत्यहितार्थमात्मानं नापेक्षन्त इति स्वरक्षणवत् स्वजातिरक्षणेऽपि नैसर्गिकी जीवानां प्रवृत्तिः। अत एव विकसिते मानवे नैसर्गिकी आत्मरक्षणप्रवृत्तिरेव स्वार्थवादं स्वजातिरक्षणप्रवृत्तिश्च सामाजिकीं परार्थभावनां सहानुभूतिं चोद्भावयतीति राशडेलमहोदयस्य कथनं सङ्गच्छते (शुभाशुभ के सिद्धान्त, पृ० २३)। अत एव मानवः स्वजीवने एवाभिरुचेः साध्यात् साधनोन्मुखतया परार्थजीवातुहेतुभूतां सहानुभूतिमर्जयतीति मिलमहोदयस्य वचनमसङ्गतमेव। किञ्च, स्वार्थवादस्य परार्थसंक्रमणप्रयोजकेषु बाह्यादेशेष्वान्तरिकादेशं परिवर्धयतो मिलमहोदस्य उपयोगितावादोऽपि बुद्धिपरतावादम् (रेशनलिज्म) उपक्रामति। वस्तुतस्तु स्वार्थसुखवादतः परार्थसुखवादसंक्रान्तये न कश्चिद् यौक्तिको मार्ग इति मार्टिन्यूमहोदयस्य वचनं तथ्यमेव। ततश्च न स्वार्थसुखवादः परार्थमुपसंक्रामति, किन्तूभावपि स्वाभाविकावेवेति राशडेलमतमेव ज्यायः।

## प्राचीनार्वाचीनसुखवादयोर्भेदः

एवं प्राचीनार्वाचीनभेदाभ्यां द्विविधः सुखवादः प्रदर्शितः। तत्र अरिस्टिपस-एपीक्यूरसमहोदयौ यथाक्रमं स्थूलस्वार्थसुखवादस्य (ग्रास ईगोइज्म) परिष्कृतसुखवादस्य

( रिफाइण्ड ईगोइज्म ) च प्रधानाचार्यौ । उभावपि प्राचीनसुखवादस्य प्रवर्तकौ । अर्वाचीनसुखवादस्य उपयोगितावादापरपर्यायस्य प्रवर्तकौ बेन्थम-मिलमहोदयौ यथाक्रमं स्थूलोपयोगितावादस्य परिष्कृतोदात्तोपयोगितावादस्य चाचार्यौ । सेथमहोदयेन च प्राचीनार्वाचीनसुखवादयोस्तुलनां कुर्वता तयोस्त्रिविधं वैधर्म्यमुपदर्शितम् ।

१. प्राचीन उभयविधोऽपि सुखवादो निराशात्मकः । अर्वाचीनश्चाशावादात्मक इति प्रथमो भेदः । ऐपीक्यूरसप्रभृतयो भावात्मकसुखस्वरूपस्थाने दुःखनिवृत्तिमात्रं निःश्रेयसं मन्यन्त इति निवृत्त्यात्मकत्वान्नैराश्यप्रधानं तत्स्वरूपम् । नव्यस्तु सुखवादो न तथेति भेदः ।

२. प्राचीनः सुखवादो वैयक्तिकः स्वार्थसुखवादात्मकः ( ईगोइस्टिक ) आसीत्, अर्वाचीनश्च परार्थसुखवादात्मकः ( एल्ट्रूइस्टिक ) इति द्वितीयो भेदः । प्राचीनस्याधिकतमवैयक्तिकसुखस्य स्थाने बहुसंख्यकजनानामधिकतमं सुखमेव जीवनोद्देश्यरूपमर्वाचीनैः सुखवादिभिरङ्गीक्रियते ।

३. प्राचीना हि सुखानां तीव्रत्वादिरूपं परिमाणकृतमेव तारतम्यं स्वीकुर्वन्ति । ऐपीक्यूरियनसम्प्रदायानुयायिभिर्भौतिकसुखापेक्षया मानसिकसुखानां य उत्कर्षः स्वीकृतः, सोऽपि दुःखासंभिन्नत्वचिरस्थायित्वादिपरिमाणकृतभेदप्रयोजकनिमित्तमूलकः, न तु मानसिकानां सुखानां केनचिद् गुणात्मकेन ( क्वालीटेटिव ) वैशिष्ट्येन स्वतो वरणीयता तेषामभिमता । ऐपीक्यूरसमहोदयेन सह पैले-बेन्थममहोदयावपि भौतिकानां मानसिकानां च सर्वेषामेव सुखानां परिमाणसाम्ये सति साजात्यमेव प्रतिपादयतः । मिलमहोदयस्य मतेन तु भौतिकमानसिकसुखयोर्गुणात्मकं ( क्वालीटेटिव ) स्वतन्त्रमेव तारतम्यम्, येन तयोर्मध्ये मानसिकं सुखं स्वभावतो वरणीयतरं वरिष्ठं च ।

## उपयोगितावादस्य प्रभावः

बेन्थम-मिलप्रभृतिभिराचार्यैर्बहुतमानां लोकानां बहुतमसुखस्य सिद्धान्तः कर्मणामुपादेयतातारतम्यप्रयोजक इति प्रतिपाद्य समाजस्य महानुपकारो विहितः । प्रत्येकं जन एक एव, न त्वेकतोऽधिकः कश्चिदपि । अधिकतमानां जनानामधिकतमं सुखमेव कर्मणः साधुत्वे उपादेयत्वे च प्रयोजकमित्यादयो बेन्थम-मिलप्रभृतीनामुपयोगितावादिनां सिद्धान्ताननुसृत्य सामाजिके राजनीतिके न्यायक्षेत्रे च भूयांसः सिद्धान्ताः स्थिरीभूताः । मिलमहोदयस्य उपयोगितावादे बहवो दोषा दृश्यन्ते । दर्शिताश्च केचिदत्रास्माभिः, तथापि सामाजिके जीवने तेन महदुपकृतमित्यत्र न कश्चिदपि संशयः । प्रजातन्त्रवादस्य तु आधारभूता प्राणभूताश्च त एव सिद्धान्ताः ।



# अष्टमः परिच्छेदः

## विकासात्मकः सुखवादः

### हर्बर्टस्पेन्सरस्य विकासात्मकः सुखवादः ( इवोल्यूशनरी हैडोनिज्म )

बेन्थम-मिलमहोदययोः पूर्वोक्तः सुखवादोऽनुभवमूलकः सुखवाद ( इम्पीरिकल हैडोनिज्म ) इति व्यवह्रियते। तदुत्तरवर्तिनां हर्बर्टस्पेन्सर-लेस्लीस्टीफेन-अलेग्जैण्डर-प्रभृतीनां (१८२०-१९०३ ई०) सुखवादो विकासात्मकः सुखवाद (इवोल्यूशनरी हैडोनिज्म) इत्युच्यते। चार्ल्सडार्विनमहोदयो ( १८०९-१८८२ ) हि विकासवादसिद्धान्तस्य प्रवर्तकः। तदुत्तरं पाश्चात्यसाहित्ये सर्वत्रैव विकाससिद्धान्तस्य प्रभावः स्फुटं दृश्यते। विकास-सिद्धान्तेन हि सर्वमपि जगद् व्याप्तमिव लक्ष्यते। ततश्च नीतिशास्त्रेऽपि विकासवादस्य प्रभावः स्फुट एव। सर्वत्र प्राग् नीतिशास्त्रे विकासवादस्य प्रयोगो हर्बर्टस्पेन्सरमहोदयेनैव विहितः। अतस्तस्य सिद्धान्तो 'विकासात्मक-सुखवाद'-शब्देन उच्यते। पशूनां नैतिकता-विहीनाद् व्यवहारादेव नैतिकतायाः क्रमिको विकासः संजात इति स्पेन्सरमहोदयस्य मतम्। विकासस्य आदिरन्तश्च परोक्षमेव नास्मदृग्गोचरतामुपेतः। नैतिकतायाः प्रारम्भोऽतीतस्य गर्भेऽन्तर्हितः, पूर्णतया विकसितस्य नैतिकजीवनस्य चरमविकासात्मको-ऽन्तश्च कल्पनागोचरत्वमपि नोपयातीति द्वयमप्येतत्तिरोहितमेव न प्रत्यक्षम्। पशुजीवना-दारभ्य नैतिकतयाः क्रमिको विकास एवानुभवगोचरः। तद्व्याख्यायां च केचिदैतिहासिकीं पद्धतिमनुसरन्ति। हेगल-ग्रीनप्रभृतय आदर्शवादिन आदर्शानुरोधेन तद्व्याचक्षाणाः ( टैललॉजिकल मैथेड ) प्रयोजनवादसरणिमनुधावन्ति। हर्बर्टस्पेन्सरमहोदयश्च यो हि पशुव्यवहारे नैतिकतामूलमनुसन्धत्ते, स तद्व्याख्यार्थं जैविकनियमान् ( बायोलॉजिकल मैथड ) अवलम्बते। बेन्थम-मिल-ह्यूम-वेनप्रभृतयश्च तत्र मनोवैज्ञानिकीं भङ्गिमङ्गी-कुर्वन्ति। तेषां सुखवादो ह्यनुभवमूलकः सुखवादो ( इम्पीरिकल हैडोनिज्म ) भवति। हर्बर्टस्पेन्सरमहोदयस्तु जीवविकासक्रमेणैव नैतिकताविकासं व्याचष्ट इति तदीयः सुखवादो विकासात्मकः सुखवाद (इवोल्यूशनरी आर डिडक्टिव हैडोनिज्म) इत्यभिधीयते।

स्पेन्सरमहोदयस्य मते कर्मणामुद्देश्येन सह जीवस्य वातावरणेन सह समायोजनं सामञ्जस्यावस्थापनं वा व्यवहारस्य प्रयोजनम्। किञ्चिद्धि कर्म तस्य सामञ्जस्याभिवर्द्धकं तदेव सत्कर्मेत्युच्यते। यच्च कर्म तस्यावरोधकं तदेवासत्कर्मेति भण्यते। सद्व्यवहारो हि जीवस्य वातावरणेन कर्मणश्चोद्देश्येन सह सामञ्जस्यमवस्थाप्य सुखमुत्पादयति। असद्-व्यवहारश्च सामञ्जस्यप्रतिरोधकं इति दुःखजनको भवति। प्रायेण सर्वोऽपि व्यवहारोऽशतः असन् सन वा भवति, न त्वेकान्ततः सदसद् वा सामान्यतो व्यवहारः। तद्धि कर्म सामञ्जस्य-मवस्थापयति, तद् दुःखापेक्षया प्रभूतं सुखमुपजनयतीति सत्कर्म उच्यते। सामञ्जस्यप्रतिरोधकं च कर्म सुखापेक्षयाधिकं दुःखमुपजनयतीति तदसत्कर्मेत्युच्यते।

## सुखदुःखयो जैऽविकं महत्त्वम् ( बायोलॉजिकल सिग्नीफिकेन्स आफ प्लेजर एण्ड पेन )

हर्बर्टस्पेन्सरमहोदयेन जीवविज्ञानमेवाधारीकृत्य स्वसुखवादस्य संस्थापनं कृतम्। तन्मते सुखदुःखे हि यथाक्रमं जीवनस्य वृद्धिक्षयसूचके। सुखप्रदं कर्म जीवनस्य रक्षकं दुःखप्रदं च तद्विनाशकम्। सर्वोऽपि जन्तुः सुखलाभाय दुःखविनाशाय च यतते। तस्मात् सुखं जीवनसाधकं दुःखं च तद्बाधकमित्यनुमीयते। स्पेन्सरमहोदयस्य मते सुखं हि जीवनस्योच्चतमं लक्ष्यम्, सन्निकृष्टं लक्ष्यं ( प्रावसीमेट एण्ड ) च जीवनस्य विस्तार एव। जीवनविस्तारेण च तस्यायुष्यलक्षणः सत्ताकालः समाजविस्ताररूप आयत्नश्चेत्युभयमपि गृह्यते। आत्मरक्षणं जातिरक्षणं चेत्युभयमप्यवलम्ब्य जीवानामुत्क्रान्तिः सम्भवति। य एव जीवा आत्मरक्षणे तद्द्वारा च स्वजातिरक्षणे क्षमा अभवन्, त एवाद्य जीवन्ति। तद्व्यतिरिक्तास्तु जीवनसंघर्षे विलीना एव। तस्माद् जीवनविस्तारे आत्मरक्षणं जातिरक्षणं चेत्युभयमपि समाविष्टं भवति। स एव जीवनविस्तारो जीवनस्य सन्निकृष्टं लक्ष्यम्। तत्साधकं कर्म शुभं भवति, तस्य च चरमफलं सुखमिति निगद्यते। ततश्च जातिव्यक्त्योर्जीवनस्याभिवृद्धिर्नैतिकतायाः सन्निकृष्टं सुखं च विप्रकृष्टं लक्ष्यम्। कासाञ्चिदकर्तव्यभावनानामपराभिः कर्तव्यभावनाभिर्नियन्त्रणमेव नैतिकचेतनायाः स्वरूपम्। तदर्थं च स्पेन्सरमहोदयोऽपि बेन्थममहोदयस्य राजनीतिक-धार्मिक-सामाजिकनियमान् बाह्यादेशरूपानङ्गीकरोति। मिलमहोदयस्य चान्तरिकादेशवन्नैतिकनियन्त्रणमपि स तत्र नियामकमभ्युपैति।

## नैतिकी बाध्यता ( मॉरल आब्लीगेशन )

पूर्वोक्तबाह्यादेशवशादान्तरिकादेशवशाद् वा मानवः क्वचित् कर्मविशेषस्यानुष्ठाने बाध्यमिवात्मानमनुभवति। सैव नैतिकी बाध्यता कर्तव्यभावनेत्युच्यते। तत्र नैतिकबाध्यतायां प्रभुत्वं ( अथारिटेटिवनेस ) बाध्यता ( आब्लीगेटरीनेस ) चेत्यस्त्यंशद्वयम्। प्रभुत्वसम्पन्नता हि प्रायश उच्चतरभावनासम्बद्धा भवति। स्वार्थभावना हि आद्यानुभूतिः। सहानुभूतिश्च तदुत्तरवर्तिनी अधिकविचारमूलाऽधिकमिश्रिता च भावना। सा च स्वार्थबुद्ध्यपेक्षयाधिकप्रभुत्वसम्पन्ना भवति, यद्वशेन स्वार्थमप्युत्सृज्य मानवो बलादिव प्रेरितः परार्थसाधनाय यतते। बाध्यतात्मकं च यत् तत्त्वान्तरं तत्र नैतिकनियन्त्रणरूपादान्तरिकादेशाद् भिन्ना राजनीतिक-सामाजिक-धार्मिकादेशरूपा बाह्यनियमा एव प्रयोजकाः। स्पेन्सरमहोदयस्य मते सेयं कर्तव्यभावना नैतिकी बाध्यता वा न चिरस्थायिनी। आदावेव मानवो बाध्यताभिमानमनुभवति। यथा यथा चाभिवर्धते नैतिकी भावना तथा तथा बाध्यता विलयं गच्छति। मानवस्य सामाजिकवातावरणे सामञ्जस्यं यावत् सुस्थिरं न भवति, तावत् कर्तव्यानुष्ठाने बाध्यतामनुभवति। संजाते च सामञ्जस्ये यथेष्टं विकसिते च नैतिकीकरणे बाध्यताया अनुभूतिमन्तरा स्वत एव प्रवृत्तिर्भवति। अभ्यासजन्यकर्मवच्चानायासेनैव सत्कर्म निष्पन्नं भवति, तत्र च सन्तोषमनुभवति मानवः।

## स्वार्थः ( ईगोइज्म ) परार्थश्च ( अल्ट्रूइज्म )

स्पेन्सरमहोदयस्य मते स्वार्थः परार्थश्चोभावप्यनैकान्तिकौ परस्पराश्रितौ च। विशुद्धः स्वार्थो विशुद्धश्च परार्थ उभावप्यवैधौ। स्वार्थपरार्थयोः संघर्ष एव नैतिकीं बाध्यतां

प्रवर्तयति। परं स न निरपेक्षः स्थिरो वा। स्वार्थपरार्थयोरुभयोरपि भिन्नमधिकारक्षेत्रं संकीर्णं च। आत्मरक्षणमात्मोत्सर्गश्चोभावपि मानवस्वभावे सहजातौ। तदुभयावलम्बनेनैव प्रवर्तते संसारचक्रमिदम्। जातिविकासे स्वार्थपरार्थयोरुभयोरपि विकासो मूलम्। एकान्तः स्वार्थ एकान्तश्च परार्थ उभयमप्यात्मघाताय कल्पते। उभयोः समन्वयश्च निःश्रेयसकरः परः।

## निरपेक्षं नीतिशास्त्रम् ( आब्सोल्यूट एथिक्स )

हर्बर्टस्पेन्सरमहोदयस्य मते सापेक्षं ( रिलेटिव एथिक्स ) निरपेक्षं ( आब्सोल्यूट एथिक्स ) चेति द्विविधं नीतिशास्त्रम्। व्यक्तिगतजीवनस्य सामाजिकजीवनेन सह पूर्णतया सामञ्जस्ये स्थापिते सति निरपेक्षं नीतिशास्त्रमेव कर्तव्यनिर्देशकं भवति। ततः पूर्वमपूर्णे सामञ्जस्ये सापेक्षं नीतिशास्त्रं कर्तव्यस्य निर्देशकं भवति। तच्च शुभाशुभकर्मणोर्मध्ये-ऽल्पतरमशुभं कर्म स्वीकरोति। यच्च दुःखेनासंभिन्नं विशुद्धं सुखमभिवर्धयति, तदेव निरपेक्षं सत्कर्म। निरपेक्षनीतिशास्त्रस्य चादेशाः पूर्णतया विकसिते समाजे एव मान्या भवन्ति। स्पेन्सरमहोदयस्य मते तादृशोऽपि कश्चित् कालः समेष्यति, यत्र व्यष्टिहितानां समष्टिहितैः सह पूर्णतया सामञ्जस्यं भविष्यति। व्यक्तिहितस्य समाजहितेन सह न कश्चिद् विरोधो भविष्यति। नैतिकी बाध्यता च पूर्णतया विलयं यास्यति। सर्वोऽपि च जनो लीलानिश्वास-वदनायासेनैव धर्मपरत्वमेष्यति। तदेयमेव भगवती भूतधात्री स्वर्गरूपतां गमिष्यति। अत्रैव च शाश्वती शान्तिः स्वर्गस्य राज्यं चाविर्भूतं भविष्यति।

तदेवं पशुव्यवहारे नैतिकतामूलमन्वेषयता स्पेन्सरमहोदयेनैव नीतिशास्त्रे विकास-वादस्य समावेशो विहितः। जीवस्य वातावरणेन सह सामञ्जस्यस्थापनमेव जीवनं व्यवहारश्च। यच्च कर्म जीवनस्य वातावरणेन सह सामञ्जस्यमभिवर्धयति, तदेव शुभं सुखकरं च, तद्भिन्नं सामञ्जस्यबाधकं च कर्म दुःखकरमसत्कर्म च भवति। सुखं हि जीवनवृद्धेर्लक्षणम्, दुःखं च तत्क्षयस्य सूचकम्। यो हि दुःखासंभिन्नं विशुद्धं सुखमुपजन-यति, स एव निरपेक्षो विशुद्धश्च सद्व्यवहारः। यश्च दुःखापेक्षयाधिकं सुखमुपजनयति, स आपेक्षिकः सद्व्यवहारः, सुखापेक्षयाऽधिकस्य दुःखस्य जनकश्चापेक्षिकोऽसद्व्यवहार इत्युच्यते। जीवनस्य विस्तार एव जीवनस्य सन्निकृष्टं लक्ष्यम्, सुखप्राप्तिश्च विप्रकृष्टं चरमलक्ष्यम्। सन्निकृष्टलक्ष्यमुखेनैव तत्पृष्ठभावितया सुखस्योपलब्धिः। नैतिकी चेतना हि प्रारम्भे राजनीतिक-सामाजिक-धार्मिकरूपाणां बाह्यादेशानामान्तरिकादेशरूपाणां च नैतिकनियन्त्रणानां फलम्। नैतिकी बाध्यता च व्यक्तिगतजीवनस्य सामाजिकजीवनेन सहापूर्णसामञ्जस्यजन्याऽल्पस्थायिनी च। समुपजाते च सम्पूर्णे सामञ्जस्ये विलयमेष्यति नैतिकी बाध्यता, अनायाससाध्यानि च लीलाश्वासवद् भविष्यन्ति सर्वाणि शुभकर्माणि। स्वार्थपरार्थयोर्विरोधो विलयमेष्यति, शाश्वती शान्तिः सुखं च भूतधात्रीमिमामाच्छाद-यिष्यति। तदास्यामेव पृथिव्यां स्वर्गस्य राज्यं संस्थापितं भविष्यतीति समासतो हर्बर्ट-स्पेन्सरमहोदयस्य सिद्धान्तानां सारांशः।

## तदालोचनम्

स्पेन्सरमहोदयेन नीतिमार्गे विकासवादस्य विनियोगं विधाय योऽयं पशुव्यवहारान्नीतिमार्गस्य विकासोऽभ्यूहितः, स आपातरमणीय एव, न तु परमार्थः। विकासवादो हि विद्यमानस्यार्थस्य क्रमिकां विकाससरणिमुपपादयितुं क्षमो न त्ववर्तमानस्य। अचेतनाच्चैतन्यस्योत्पत्तिः कथं जायत इत्यत्र विकासवादो नहि कथञ्चिदपि चैतन्योत्पत्तिमुपपादयितुं क्षमते। तद्वदेव नीतिशून्यात् पशुव्यवहारान्नैतिकव्यवहारस्य कथमुत्पत्तिरित्यत्रापि विकासवादोऽसमर्थ एव युक्तियुक्तं मार्गमादर्शयितुम्। नहि नीतिविहीना नैतिकतायाः समुत्पत्तिरिति नीतिमार्गे विकासवादोऽनुपयुक्त एव। नीतिमार्गस्य आदर्शावधारणमेव नीतिशास्त्रस्य प्रयोजनम्, न तु नैतिकविचाराणां विकासस्याध्ययनमिति चात्र विकासवादस्य विनियोगो व्यर्थ एव। किञ्च, जीवोत्क्रान्तिवादस्य प्राकृतिकनिर्वाचनं (नैचुरल सेलेक्शन) योग्यतमस्य विजयश्च (सरवाइवल आफ दि फिटेस्ट) इत्यादयः सिद्धान्ता अपि नीतिशास्त्रे नोपयुज्यन्ते। बलवतो विजयो दुर्बलस्य विनाशश्च जीवोत्क्रान्तिसिद्धान्तस्य मूलभूतः। तत्र बलमेव सत्, यत्र बलं तत्र जयः। नीतिशास्त्रे तु सदेव बलं नैतिकोत्कर्षवतो गुरुत्वमेव च योग्यतमस्य विजयः। तस्मिंश्च गुरुत्वे निर्बलस्य रक्षणमपि समाविष्टं न तु विनाशः। तत्र क्रूरतामयस्यात्मख्यापनस्य स्थाने आत्मसंयमो विराजते। यथा च नीतिशास्त्रे प्राकृतिकं निर्वाचनं न दुर्बलानां विरोधे, किन्त्वसमुन्नतानामादर्शानां विरोधे भवतीति परोऽपि सुखवादी अलेक्जैण्डरमहोदयः।

किञ्च, नैतिकी भावना जीवोत्क्रान्तिसिद्धान्तस्याङ्गरूपतामपि नावगाहते। जीवोत्क्रान्तिसिद्धान्ते (हैरिडिटी एण्ड एनवारमैण्टस) वंशानुक्रमस्य वातावरणस्य च प्रभावेणैव व्यक्तिविकासो न तु स्वेच्छायास्तद्विकासे कश्चिदुपयोगः। नीतिशास्त्रस्य चेच्छास्वातन्त्र्यमेव मूलम्। नैतिकी प्रगतिर्हि सामाजिके वातावरणेंऽशत एवाश्रिता। प्रधानतस्तु जनानामन्तर्दृष्टिः कर्मस्वातन्त्र्यमिच्छास्वातन्त्र्यं च तत्र नियामके इति नीतिविज्ञानं जीवोत्क्रान्तिवादस्याङ्गमपि न भवति।

अपि च, हर्बर्टस्पेन्सरमहोदयो नैतिकबाध्यतायाः कारणं निर्देष्टुमक्षमस्तस्या अल्पस्थायित्वं प्रतिपादयति। तदप्यसमीचीनमेव; नैतिकी बाध्यता हि नैतिकचेतनाया अपरिहार्योंऽथ च चिरस्थिरोंऽशः। नैतिकी प्रगतिर्नैतिकबाध्यतामभिवर्धयति, न तु तिरोदधाति। यथा यथा हि समाजस्य नैतिकः स्तर उच्चतरो भवति, तथा तथा नैतिकादर्शोऽप्युच्चतरतामुपैति। न च व्यक्तिजीवनस्य सामाजिकजीवनेन सहासामञ्जस्यं नैतिकबाध्यताया मूलं भवति। तदसामञ्जस्यं बाह्यादेशानां निमित्तं तु सम्भवति, न तु नैतिकबाध्यतायाः। नैतिकादर्शानुरूप्येणैव नैतिकबाध्यतायाः स्पष्टीकरणं सम्भवति। नैतिकादर्शश्चानवच्छिन्नो न खल्वस्मिन्नेव जीवने पूर्णतामधिगच्छतीति नैतिकी बाध्यता नैतिकचेतनायाः स्थिरो भागः। यश्च निरपेक्षनीतिसिद्धान्तः, समुपजाते च व्यष्टिसमष्ट्योः सम्पूर्णसामञ्जस्ये स्वार्थपरार्थयोर्विरोधाभावे साम्यावस्थायाः स्वर्गराज्यस्य च सिद्धान्तोऽनेन प्रदर्शितः, सोऽपि न विचारसहः। नहि विकासवादस्यादर्शः साम्यावस्था सम्भवति। एकदा सञ्जाते सामञ्जस्ये पुनरपरं निमित्तं तत्र वैषम्यापादकं भविष्यति। यत्र हि जीवनं भवति, तत्र द्वन्द्वः संघर्षः परिवर्तनं चापरिहार्यमेव। यदा हि किञ्चिदापेक्षिकं सामञ्जस्यं

स्थाप्यते, तदैव किञ्चिन्निमित्तान्तरं तद्विघटकमुपजायते। पुनश्च महता प्रयत्नेन सामञ्जस्यं पुनश्च विघटनमितीत्यनवच्छिन्नेयं प्रक्रिया। ततश्च स्पेन्सरमहोदयस्य विकासवादस्य परिणतिरूपः स्वर्गोऽप्राप्य एव। अत एव न खलु विकासवादस्यादर्शः साम्यावस्था भवितुमर्हतीति म्यूरहेडमहोदयस्य कथनं सङ्गच्छते।

### लेस्लीस्टीफेनमहोदयस्य समाजशरीरवादः ( सोशल आर्गेनिज्म )

बेन्थम-मिलप्रभृतय उपयोगितावादिनोऽधिकतमस्य लोकस्याधिकतमं सुखमेव कर्मणां साधुत्वाधायकं मन्वते। तथापि ते व्यक्तिवादिन एव। हर्बर्टस्पेन्सरमहोदयोऽपि व्यक्तिमेव समाजस्य केन्द्रं मनुते। एषां मते व्यक्तिसमुदाय एव समाजः। किन्तु सर्वतः प्राग् लेस्लीस्टीफेनमहोदयेन समाजशरीरस्य परिकल्पना कृता। व्यक्तयोऽङ्गभूताः समाजश्चाङ्गीत्युभावप्यङ्गाङ्गिनौ परस्पराश्रयौ। नहि समाजव्यतिरिक्तः स्वतन्त्रो व्यक्तिः कश्चित्। नहि व्यक्तिसमाजयो बाह्यः सम्बन्धोऽपि त्वान्तरो नित्यश्च। यथा हि शरीर-कारणभूतेनैव द्रव्येण प्रयोजनविशेषमुद्दिश्य विविधानामङ्गानां निर्माणम्, तथैव सामाजिकद्रव्येण प्रयोजनविशेषमुद्दिश्य समाजाङ्गानां निर्माणं भवति, तेषां च पृथक् पृथक् कार्याणि भवन्ति। शरीरवच्च समाजशरीरस्यापि विकासस्तेन च विविधाङ्गानां कार्यक्षमतायामभिवृद्धिर्भवति, येनाधिकतमसुखरूपं जीवनस्य लक्ष्यं सुचारुरूपेण सम्पन्नं भवति।

### समाजशरीरस्य स्वास्थ्यम् ( हेल्थ आफ सोशल आर्गेनिज्म )

लेस्लीस्टीफेनमहोदयस्य मते न खलु बहुसंख्याकस्याधिकतमस्य लोकस्याधिकतमं सुखम्, न वा स्पेन्सराभिमतो जीवनविस्तार एव जीवनस्य लक्ष्यम्, किन्तु समाजशरीरस्य स्वास्थ्यं कार्यक्षमत्वमेव वा जीवनोद्देश्यम्। स्वास्थ्यमेव साधुत्वस्य वैज्ञानिकं लक्षणं न तु सुखम्। समाजस्य स्वास्थ्यसाधकं कर्मैव सत्कर्म, तद्विघातकं चासत्कर्म। स्वास्थ्यसुखयोश्च न वास्तविकः कश्चिद्विरोधः, किन्तु सहयोग एव प्रायो भवति। स्वास्थ्यस्य विघातकं कर्म सामान्यतः कष्टप्रदं भवति। लाभदायकं च कर्म सामान्यतः सुखकरमपि भवति। नैतिकनियमा हि सामाजिकजीवनस्याधारभूताः। ते हि समाजस्य स्वास्थ्यवर्धकाः। समाजाभिमतस्यान्तःकरणे प्रतिध्वनिरेवान्तःप्रेरणा। सहानुभूतिश्च सहजा सामाजिकी प्रवृत्तिः। समाजस्य सदस्यरूपेण सा सर्वत्राप्यावश्यकी। समाजस्य विकासेन सहैव सहानु-भूतिरूपायाः सामाजिकभावनाया अपि विकासो भवति। व्यवहारस्य विकासेन सह च चरित्रमपि विकसति।

किञ्च लेस्लीस्टीफेनमहोदयो हर्बर्टस्पेन्सरमहोदयस्य निरपेक्षनीतिशास्त्रसिद्धान्तमपि नानुजानाति। स साम्यावस्थारूपं स्पेन्सराभिमतं चरमोद्देश्यं नाङ्गीकरोति यदभिमुखं समाजः प्रवर्तते। स समाजस्य वर्तमानं स्वरूपमेव स्वीकरोति। तस्य स्वास्थ्यं कार्यक्षमतामेव साध्यं जीवनोद्देश्यं मनुत इति समासतो लेस्लीस्टीफेनमहोदयस्य सिद्धान्तानां सारांशः।

### तदालोचनम्

लेस्लीस्टीफेनमहोदयेन समाजशरीरस्य रूपकालङ्कारमुखेन याऽभिनवा परिकल्पना विहिता, तस्याः कार्यक्षमतायां स्वास्थ्यारोपमुखेन च समाजस्य कार्यक्षमतानिर्वाहकमभिवर्धकं

च कर्म सत्कर्मेति यत् प्रतिपादितम्, तत्सर्वमलङ्कारारूपतयैव शोभते, न तु वस्तुतः। समाजशरीरस्यावयवभूताः सर्वा अपि व्यक्तयश्चेतनाः सुखादीनामनुभवकर्त्र्यश्च मानवशरीरस्यावयवभूताः परमाणवो हस्तपादादयो वा, न चेतनाः, न च सुखादीनामनुभवितार इत्येकदेशविवर्तिरूपकम्, न तु समस्तवस्तुविषयम्। न च समाजः परमार्थतः शरीरभूतः। व्यक्तीनां समुदायभूत एव समाजः। व्यक्तय एव चेतना अनुभवित्र्यश्च। तस्मादालङ्कारिक एवायं व्यवहारः। यथा च समाजशरीरस्यालङ्कारिको व्यवहारस्तथा समाजस्य स्वास्थ्यमित्यत्राप्यालङ्कारिकव्यवहार एव शरणम्, न तु पारमार्थिकसमाजस्य स्वास्थ्यम्। व्यक्तिभेदेनानुभूतिकेन्द्राणां भेदः, न च तेषामेकत्र विलयः। एवं व्यक्तिसुखस्य समाजसुखे व्यक्तिस्वार्थस्य समाजस्वार्थे वा न सर्वात्मना विलयः। स्टीफेनमहोदयो हि सुखवादसम्प्रदायान्तर्भूतः, परं समाजस्य स्वास्थ्यमेव नैतिकताया मानदण्डं विधाय वस्तुतः सुखवादात् प्रच्यवते। वैयक्तिकसामाजिकस्वार्थयोर्विरोधे नहि सुखवादपक्षे परिहारसम्भवः। तस्मादालङ्कारिकव्यवहारतयैव शोभनोऽयं स्टीफेनमहोदयस्य पक्षः (ए मारल रूल इज ए स्टेटमेण्ट आफ कण्डीशन आफ सोशल वेलफेयर : साइंस आफ एथिक्स) इत्येवंरूपश्च तदीयो नैतिकनियमानां समाजहितकरत्वसिद्धान्तश्च समीचीन एव।

### अलेग्जैण्डरमहोदयः

अलेग्जैण्डरमहोदयोऽपि विकासात्मकसुखवादिनामन्यतमः। तन्मते इदमेव वैशिष्ट्यं यदनेन विकासवादसिद्धान्तानां मनोवृत्तिषु विनियोगो विहितः, व्यक्तेः समाजस्य च सामञ्जस्यस्थाने परस्परविरोधिनीषु मनोवृत्तिषु सामञ्जस्यस्थापनमेव एषामभिमततरम्। यानि कर्माणि मानसिकवृत्तीनां सामञ्जस्यस्थापनक्षमाणि तान्येव श्रेयांसि सफलानि च। डार्विनमहोदयेनाविष्कृतस्य प्राकृतिकनिर्वाचननियमस्य (नैचुरल सेलेक्शन) अलेग्जैण्डरमहोदयेन नैतिकेषु नियमेषु साधुविनियोगो विहितः। जीवनसंग्रामे (स्ट्रगल फार दि एग्जिसटैंस) योग्यतम एवावशिष्यते (सरवाइवल आफ दि फिटैस्ट) इत्ययं डार्विनमहोदयस्य विकासवादपरिचालकः सिद्धान्तो नीतिशास्त्रेऽपि तथैवानुयुज्यते। व्यक्तिप्रतियोगितायाः स्थाने नीतिशास्त्रे सिद्धान्तानां प्रतियोगिता भवति। उत्तमो ह्याचारोऽधमाचारं पराजयते। त एव चादर्शा विजयिनोऽवशिष्यन्ते, ये समाजस्य योगक्षेममभिरक्षन्ति, स्वास्थ्यं चाभिवर्धयन्ति। नीतिमार्गे चोदात्तानामादर्शानां प्रोत्साहनेनैव विजयो न तु बलप्रयोगेण। मानवव्यापारे न दुर्बलान् विरोधिनः प्रति, किन्तु तदादर्शानाचारांश्च प्रति जीवनसंग्रामो यद्वा प्राकृतिकनिर्वाचनसंग्रामो भवति। स च सामाजिकहितानुलोममेवादर्शं स्थिरीकरोति। जीवोत्क्रान्तौ बलप्रयोगेण बलवत्तराः प्राणिनो दुर्बलान् घातयन्ति। नैतिकोत्क्रान्तौ तु उदात्तादर्शानां प्रोत्साहनमेव तेषां विजयः। अयमेव समासतः अलेग्जैण्डरमहोदयस्य मते विशेषः।



# नवमः परिच्छेदः

## बुद्धिमूलक उपयोगितावादः

### सिजविकमहोदस्य बुद्धिमूलक उपयोगितावादः ( रेशनल यूटीलिटेरियनिज्म )

मनोवैज्ञानिको नैतिकश्चेति द्विविधः सुखवादः पूर्वं व्याख्यातः। मनोवैज्ञानिकः सुखवादो वस्तुवृत्ततथ्यं निरूपयति, नैतिकश्च सुखवाद आदर्शम्। 'सर्वस्य सुखमीप्सितम्, सुखं सर्वः समीहते' इत्येवमनुभूयमानं तथ्यमेव मनोवैज्ञानिकः सुखवादः प्रदर्शयति। तत्र च सिजविकमहोदयस्य मते विरोधाभासः प्रतीयते। यथा यथा सुखाय स्पृहयते मानवस्तथा तथा दूरं प्रयाति सुखं दुरवापं च जायते। यथा यथा च तत्रौदासीन्यमवलम्बते तथा तथाऽनुवर्तते सुखमिति प्रत्यहमनुभूयमानो विरोधाभासोऽनुक्षियमाणेषु सुखेषु ( प्लेजर्स आफ पर्स्यूट ) यथार्थ एव। ततश्च सिजविकमहोदयो वस्तुवृत्तापेक्षिणो मनोवैज्ञानिकसुखवादस्य स्थाने आदर्शमात्रव्यवस्थापकं नैतिकं सुखवादमेवाङ्गीकरोति। सुखं हीच्छाया आदर्श उचितो वा विषयः, न तु नैसर्गिको विषयः। सिजविकमहोदयस्य मते सुखानन्दयोर्न कश्चिद् भेदः। उभावपि पर्यायशब्दौ। सुखमात्रमेव साध्यभूतं प्रधानं तदव्यतिरिक्तं ज्ञानसौन्दर्यादिकं सर्वमपि साधनमात्रमप्रधानं च। मिलमहोदयवत् सिजविक-महोदयस्याप्येतावदभिमतम्। परं बेन्थम-मिलप्रभृतीनां सुखवादिनां मतेऽनुभव एव सुखस्य प्रधानं व्यवस्थापकम्। सिजविकमते तु बुद्धेः सहजा स्फूर्तिरेवात्र मानं न त्वनुभवः। सुखमेव परमं श्रेय इत्यत्र व्यावहारिकबुद्धेः सहजोपलब्धिरेव निर्णायिका। सिजविकमते तदेव सुखमपरोक्षज्ञानवादस्य ( इन्ट्यूशनिज्म ) बुद्धिवादस्य ( रेशनलिज्म ) च तत्त्वम्। न केवलं सर्वोच्चशुभमेव, किन्तु तद्विशेषकाःदूरद-र्शिता ( प्रूडैन्स ), परोपकारशीलता ( बैनीवोलैन्स ), न्यायः ( जस्टिस ), इत्येवमादयोऽप्यन्तःकरणेऽव-भासन्ते। तदेवं सिजविकमहोदयो बेन्थम-मिलप्रभृतीनामनुभवमूलकसुखवादाद् भिन्नस्य बुद्धिमूलकसुखवादस्य संस्थापकः।

बुद्धिमूलकोपयोगितावादे दूरदर्शिता ( प्रूडैन्स ), परोपकारिता ( बैनीवोलैन्स ), न्यायश्च ( जस्टिस ) सुखानां तारतम्यव्यवस्थापका हेतवः सिजविकमहोदयेन प्रति-पादिताः।

तत्र दूरदर्शिता ( प्रूडैन्स ) हि क्षणिकसुखापेक्षया स्थिरसुखस्यानुसरणे प्रवर्तयति पुरुषम्! साधारणः स्वार्थः क्षणिकसुखस्यानुसरणायादिशति। परं दूरदर्शिनी बुद्धिस्तत्र स्थिरास्थिरसुखयोर्विशेषं विशिनष्टि, जीवनस्य सर्वक्षणेषु समतामुद्भावयति च। ततश्च भाविनमधिकं सुखं परित्यज्य वर्तमानस्य क्षणिकसुखस्य स्वीकरणमसङ्गतमिति बोधयति। भाविने बहुतरसुखाय विद्यमानमल्पतरं सुखं हेयमेवेति च प्रदर्शयति। तदियं

दूरदर्शिता बुद्धिपूर्वकं सुखयोस्तारतम्यमवधारयतीति बुद्धिमूलकस्योपयोगितावादस्य प्रथमः कल्पः।

बुद्धिमूलकोपयोगितावादे परोपकारिताऽपि ( बैनीवोलैन्स ) सुखयोस्तारतम्यमवधारयति। केवलोऽनुभवः स्वार्थपरार्थयोरन्तरं व्यपोहितुमक्षमः। बुद्धिरेव तमन्तरं व्यपोह्य स्वार्थं परार्थेन संयुनक्ति, परार्थसाधने पुरुषं प्रवर्तयति च। सुखमेव सर्वस्य तर्कसम्मतं चरमं मङ्गलमिति बुद्धिरेव सर्वभूतेष्वात्मसाम्यमुद्बोधयति। परेषां सुखस्यापि तावदेव मूल्यं यावदात्मसुखस्य। परेषामधिकसुखस्य निष्पत्तये आत्मनोऽल्पस्य सुखस्य परित्याग एव श्रेयान्। वैयक्तिकजीवने यथा सर्वेषामपि क्षणानां सुखलाभाय समानोऽधिकारस्तथा समाजे सर्वेषां मानवानां प्राणिनां वा सुखलाभाय समानोऽधिकार इति बुद्धिरेव 'आत्मवत् सर्वभूतेषु' इति सिद्धान्तस्य प्रवर्तिका। सैव च बहुजनहिताय स्वसुखस्य बलिदानमुपदिशति, स्वसुखार्थं बहुजनसुखस्य विघातं प्रतिषेधति च। तदेवं बुद्धिरेव स्वपरसुखयोस्तारतम्यग्राहिकेति बुद्धिमूलकोपयोगितावादस्य द्वितीयः कल्पः।

एवं बुद्धिमूलकोपयोगितावादे न्यायोऽपि तृतीयस्तारतम्यविधायको हेतुः। जीवनस्य सर्वेषु क्षणेषु समानरूपेण सुखोपभोगो न सम्भवति, एवं समाजस्य सर्वे जनाः समानरूपेण सुखोपभोगे क्षमाः न भवन्ति। ततश्च वैयक्तिकजीवनस्य क्षणेषु सामाजिकजीवने व्यक्तिषु चोपभोगक्षमतायास्तारतम्यविवेको विधेयः। न्यायो न केवलं साम्यमेव विचारयति, किन्तु क्षमतां पात्रतामपि विचारयति। तुल्यायां क्षमतायां पात्रतायां च साम्यमापादयति, न तु सर्वथा निरपेक्षतया साम्यापादको न्यायः। एवं न्याये साम्येन सह वैषम्यस्याप्यभिनिवेशो भवति। योग्यतानुरूपमधिकारं विभजति न्यायः। समानायां योग्यतायां समानायां च परिस्थितौ समान एवाधिकार इति न्यायसिद्धान्तः। "यदेकस्य कृते सत्कर्म, तत् तत्तुल्ययोग्यतानां तुल्यपरिस्थितीनां चान्येषामपि कृते सदेव भवति। समानानां समानमेव समाधानम्" इति सिजविकमहोदयस्य मतम्।

एवं दूरदर्शिता ( प्रूडैन्स ) क्षणिकसुखस्य स्थाने स्थिरस्य जीवनव्यापिनः सुखस्योपभोगाय समादिशति। परोपकारिता स्वात्ममात्रसुखस्य स्थाने समाजमात्रोपभोग्यस्य सुखस्यौचित्यमवधारयति। न्यायश्च सर्वस्याधिकतमसुखलाभाय योग्यतानुसारं योग्यतमस्याधिकतमं सुखं विभजति। एते त्रयोऽपि बुद्धिमूलकोपयोगितावादे सुखस्य तारतम्यव्यवस्थापका हेतवः। एवं सिजविकमहोदयो बुद्धिवादेन अपरोक्षज्ञानवादेन वा सहोपयोगितावादं संयुनक्तीति तदीयः सिद्धान्तो बुद्धिमूलकोपयोगितावाद ( रेशनल यूटीलिटेरियनिज्म ) इत्यभिधीयते।

## बुद्धिमूलकोपयोगितावादस्यालोचनम्

दूरदर्शिता हि स्थिरस्याधिकतमस्य च स्वसुखस्यानुसरणाय प्रेरयति, परोपकारिता च समाजस्याधिकतमसुखानुसरणायादिशति। एवं बुद्धिमूलकोपयोगितावादेऽपि स्वार्थपरार्थयोर्विरोधोऽयं समुपस्थितो भवति। सिजविकमहोदयो 'व्यावहारिकबुद्धेर्द्वैतम्' ( ड्यूलिज्म आफ प्रैक्टिकल रीजन ) इति शब्देन विरोधमिममभिधत्ते। न च तं परिहर्तुं क्षमः। सर्वोऽपि जनोऽधिकतमं स्वसुखमनुसन्धत्ते। तथापि समाजस्याधिकतमं सुखं तेनानु-

# नवमः परिच्छेदः

## बुद्धिमूलक उपयोगितावादः

### सिजविकमहोदस्य बुद्धिमूलक उपयोगितावादः ( रेशनल यूटीलिटेरियनिज्म )

मनोवैज्ञानिको नैतिकश्चेति द्विविधः सुखवादः पूर्वं व्याख्यातः। मनोवैज्ञानिकः सुखवादो वस्तुवृत्ततथ्यं निरूपयति, नैतिकश्च सुखवाद आदर्शम्। 'सर्वस्य सुखमीप्सितम्, सुखं सर्वः समीहते' इत्येवमनुभूयमानं तथ्यमेव मनोवैज्ञानिकः सुखवादः प्रदर्शयति। तत्र च सिजविकमहोदयस्य मते विरोधाभासः प्रतीयते। यथा यथा सुखाय स्पृहयते मानवस्तथा तथा दूरं प्रयाति सुखं दुरवापं च जायते। यथा यथा च तत्रौदासीन्यमवलम्बते तथा तथाऽनुवर्तते सुखमिति प्रत्यहमनुभूयमानो विरोधाभासोऽनुक्षिप्यमाणेषु सुखेषु ( प्लेजर्स आफ पर्स्यूट ) यथार्थ एव। ततश्च सिजविकमहोदयो वस्तुवृत्तापेक्षिणो मनोवैज्ञानिकसुखवादस्य स्थाने आदर्शमात्रव्यवस्थापकं नैतिकं सुखवादमेवाङ्गीकरोति। सुखं हीच्छाया आदर्श उचितो वा विषयः, न तु नैसर्गिको विषयः। सिजविकमहोदयस्य मते सुखानन्दयोर्न कश्चिद् भेदः। उभावपि पर्यायशब्दौ। सुखमात्रमेव साध्यभूतं प्रधानं तदव्यतिरिक्तं ज्ञानसौन्दर्यादिकं सर्वमपि साधनमात्रमप्रधानं च। मिलमहोदयवत् सिजविक-महोदयस्याप्येतावदभिमतम्। परं बेन्थम-मिलप्रभृतीनां सुखवादिनां मतेऽनुभव एव सुखस्य प्रधानं व्यवस्थापकम्। सिजविकमते तु बुद्धेः सहजा स्फूर्तिरेवात्र मानं न त्वनुभवः। सुखमेव परमं श्रेय इत्यत्र व्यावहारिकबुद्धेः सहजोपलब्धिरेव निर्णायिका। सिजविकमते तदेव सुखमपरोक्षज्ञानवादस्य ( इन्ट्यूशनिज्म ) बुद्धिवादस्य ( रेशनलिज्म ) च तत्त्वम्। न केवलं सर्वोच्चशुभमेव, किन्तु तद्विशेषकाःदूरद-र्शिता ( प्रूडैन्स ), परोपकारशीलता ( बैनीवोलैन्स ), न्यायः ( जस्टिस ), इत्येवमादयोऽप्यन्तःकरणेऽव-भासन्ते। तदेवं सिजविकमहोदयो बेन्थम-मिलप्रभृतीनामनुभवमूलकसुखवादाद् भिन्नस्य बुद्धिमूलकसुखवादस्य संस्थापकः।

बुद्धिमूलकोपयोगितावादे दूरदर्शिता ( प्रूडैन्स ), परोपकारिता ( बैनीवोलैन्स ), न्यायश्च ( जस्टिस ) सुखानां तारतम्यव्यवस्थापका हेतवः सिजविकमहोदयेन प्रति-पादिताः।

तत्र दूरदर्शिता ( प्रूडैन्स ) हि क्षणिकसुखापेक्षया स्थिरसुखस्यानुसरणे प्रवर्तयति पुरुषम्। साधारणः स्वार्थः क्षणिकसुखस्यानुसरणायादिशति। परं दूरदर्शिनी बुद्धिस्तत्र स्थिरास्थिरसुखयोर्विशेषं विशिनष्टि, जीवनस्य सर्वक्षणेषु समतामुद्भावयति च। ततश्च भाविनमधिकं सुखं परित्यज्य वर्तमानस्य क्षणिकसुखस्य स्वीकरणमसङ्गतमिति बोधयति। भाविने बहुतरसुखाय विद्यमानमल्पतरं सुखं हेयमेवेति च प्रदर्शयति। तदियं

दूरदर्शिता बुद्धिपूर्वकं सुखयोस्तारतम्यमवधारयतीति बुद्धिमूलकस्योपयोगितावादस्य प्रथमः कल्पः।

बुद्धिमूलकोपयोगितावादे परोपकारिताऽपि (बैनीवोलैन्स) सुखयोस्तारतम्यमवधारयति। केवलोऽनुभवः स्वार्थपरार्थयोरन्तरं व्यपोहितुमक्षमः। बुद्धिरेव तमन्तरं व्यपोह्य स्वार्थं परार्थेन संयुनक्ति, परार्थसाधने पुरुषं प्रवर्तयति च। सुखमेव सर्वस्य तर्कसम्मतं चरमं मङ्गलमिति बुद्धिरेव सर्वभूतेष्वात्मसाम्यमुद्बोधयति। परेषां सुखस्यापि तावदेव मूल्यं यावदात्मसुखस्य। परेषामधिकसुखस्य निष्पत्तये आत्मनोऽल्पस्य सुखस्य परित्याग एव श्रेयान्। वैयक्तिकजीवने यथा सर्वेषामपि क्षणानां सुखलाभाय समानोऽधिकारस्तथा समाजे सर्वेषां मानवानां प्राणिनां वा सुखलाभाय समानोऽधिकार इति बुद्धिरेव 'आत्मवत् सर्वभूतेषु' इति सिद्धान्तस्य प्रवर्तिका। सैव च बहुजनहिताय स्वसुखस्य बलिदानमुपदिशति, स्वसुखार्थं बहुजनसुखस्य विघातं प्रतिषेधति च। तदेवं बुद्धिरेव स्वपरसुखयोस्तारतम्यग्राहिकेति बुद्धिमूलकोपयोगितावादस्य द्वितीयः कल्पः।

एवं बुद्धिमूलकोपयोगितावादे न्यायोऽपि तृतीयस्तारतम्यविधायको हेतुः। जीवनस्य सर्वेषु क्षणेषु समानरूपेण सुखोपभोगो न सम्भवति, एवं समाजस्य सर्वे जनाः समानरूपेण सुखोपभोगे क्षमाः न भवन्ति। ततश्च वैयक्तिकजीवनस्य क्षणेषु सामाजिकजीवने व्यक्तिषु चोपभोगक्षमतायास्तारतम्यविवेको विधेयः। न्यायो न केवलं साम्यमेव विचारयति, किन्तु क्षमतां पात्रतामपि विचारयति। तुल्यायां क्षमतायां पात्रतायां च साम्यमापादयति, न तु सर्वथा निरपेक्षतया साम्यापादको न्यायः। एवं न्याये साम्येन सह वैषम्यस्याप्यभिनिवेशो भवति। योग्यतानुरूपमधिकारं विभजति न्यायः। समानायां योग्यतायां समानायां च परिस्थितौ समान एवाधिकार इति न्यायसिद्धान्तः। "यदेकस्य कृते सत्कर्म, तत् तत्तुल्ययोग्यतानां तुल्यपरिस्थितीनां चान्येषामपि कृते सदेव भवति। समानानां समानमेव समाधानम्" इति सिजविकमहोदयस्य मतम्।

एवं दूरदर्शिता (प्रूडैन्स) क्षणिकसुखस्य स्थाने स्थिरस्य जीवनव्यापिनः सुखस्योपभोगाय समादिशति। परोपकारिता स्वात्ममात्रसुखस्य स्थाने समाजमात्रोपभोग्यस्य सुखस्यौचित्यमवधारयति। न्यायश्च सर्वस्याधिकतमसुखलाभाय योग्यतानुसारं योग्यतमस्याधिकतमं सुखं विभजति। एते त्रयोऽपि बुद्धिमूलकोपयोगितावादे सुखस्य तारतम्यव्यवस्थापका हेतवः। एवं सिजविकमहोदयो बुद्धिवादेन अपरोक्षज्ञानवादेन वा सहोपयोगितावादं संयुनक्तीति तदीयः सिद्धान्तो बुद्धिमूलकोपयोगितावाद (रेशनल यूटीलिटेरियनिज्म) इत्यभिधीयते।

## बुद्धिमूलकोपयोगितावादस्यालोचनम्

दूरदर्शिता हि स्थिरस्याधिकतमस्य च स्वसुखस्यानुसरणाय प्रेरयति, परोपकारिता च समाजस्याधिकतमसुखानुसरणायादिशति। एवं बुद्धिमूलकोपयोगितावादेऽपि स्वार्थपरार्थयोर्विरोधोऽयं समुपस्थितो भवति। सिजविकमहोदयो 'व्यावहारिकबुद्धेर्द्वैतम्' (ड्यूलिज्म आफ प्रैक्टिकल रीजन) इति शब्देन विरोधमिममभिधत्ते। न च तं परिहर्तुं क्षमः। सर्वोऽपि जनोऽधिकतमं स्वसुखमनुसन्धत्ते। तथापि समाजस्याधिकतमं सुखं तेनानु-

सन्धेयमित्येवमात्मकं बुद्धिमूलकयोरादेशयोर्विरोधं परिहर्तुमक्षमः सिजविकमहोदय इति प्रधानं तन्मते दूषणम् ।

किञ्च, सिजविकमहोदयस्य मते सुखमेव परमं मङ्गलम् । अन्येषां मते आत्मपूर्णतैव परमं मङ्गलम् । आत्मा हि संवेदनात्मको विचारशीलश्च । सुखं तु केवलं संवेदनरूपमेव, नात्मनः पूर्णतावबोधकं भवति । शुभाशुभ-सिद्धान्तव्यवस्थापके ग्रन्थे–"बुद्ध्यनुभूतिसङ्कल्पानां मानव इति यत्र त्रयाणामप्येषां समुचितः सम्बन्धो भवति, सैव मानवस्यादर्शस्थितिः" (भाग २, पृ० ७८) इति प्रतिपादितम् । न च सिजविकमते त्रयाणामेषामभिसम्बन्धः । अनुभूतिमात्रात्मकत्वात् सुखस्य न केवलं तदेव वाञ्छनीयं भवति, नहि तेन सुखज्ञानादिमयस्यात्मनः पूर्णता भवति । न च सिजविकमते स्वार्थपरार्थयोर्विरोधस्य परिहारः सम्पादयितुं शक्यः । मार्टिन्यूमहोदयोऽपि स्वार्थात् परार्थाय न कश्चिन्मार्ग इति प्रतिपादयति । आत्मपूर्णतावादे तु सर्वभूतेष्वात्मानमभिपश्यतः परार्थोऽपि स्वार्थ एव भवतीति न स्वार्थपरार्थयोर्विरोधः । सङ्कुचितमेकदेहस्थितमात्महितं परित्यज्य व्यापकस्य सर्वहितस्यानुसन्धाने एवात्मनो यथार्थस्य स्वरूपस्याभिव्यक्तिरिति । तत्रैव 'आत्मवत् सर्वभूतेषु, सर्वभूतेषु चात्मानम्' इत्यादीनां सिद्धान्तानां समन्वय आत्मनश्च पूर्णतालाभो भवति ॥



# दशमः परिच्छेदः

## अपरोक्षज्ञानवादः ( इण्टयूशनिज्म )

### अदार्शनिकः सहजज्ञानवादः ( अनफिलासोफिकल इण्ट्यूशनिज्म )

सहजं ज्ञानमेव कर्मणां सदसत्त्वावधारकमिति केचित् । कर्मणामुद्देश्यस्य परिणामस्य च विचारमन्तराऽपि इदं सदसद् वा कर्मेति सहजं ज्ञानं स्वत एव परिस्फुरति । सिजविकमहोदयोऽदार्शनिकं सहजं ज्ञानमिदमिति व्यवहरति । सहजज्ञानवादेऽन्तःकरणमेव कर्मणां सदसत्त्वावधारणे परमं प्रमाणम् । अन्तःकरणं चेदं न वैयक्तिकम्, किन्तु सर्वव्यक्तिसमन्वितं सामान्यं विश्वनराभिमानित्वाद् वैश्वानरमन्तःकरणमेव ( यूनीवर्सल कान्शेन्स ) कर्मणां नैतिकतानिर्णायकम् । म्यूरहेडमतानुसारं सहजज्ञानवादे १. अन्तःकरणं शुद्धमव्युत्पन्नं च, २. तस्य निर्णया अपरोक्षाः, ३. तदन्तःकरणं प्रभुत्वसम्पन्नम्, ४. सामान्यरूपेण सर्वजनसमन्वितम्, ५. तथापि न सर्वत्र तुल्यस्तद्विकास इति मौलिकं तत्त्वपञ्चकम् ।

स चादार्शनिकः सहजज्ञानवादो नैतिकेन्द्रियवादः ( दि मॉरल सेन्स थ्योरी ) रसेन्द्रियसिद्धान्तवादश्चेति ( दि एस्थैटिक सेन्स थ्योरी ) द्विविधो मतः । तत्र नैतिकेन्द्रियवादसिद्धान्तेऽन्तःकरणेनान्तरिन्द्रियेण अनुमोदनात्मकतया कर्मणः साधुत्वम्, अननुमोदनात्मकतया चासाधुत्वं सद्य एव गृह्यते । तदिदं ज्ञानं प्रत्यक्षात्मकमेव भवति । यथा बाह्येन्द्रियैरार्थानां वाह्यगुणा प्रत्यक्षमेव गृह्यन्ते, तद्वदेवान्तःकरणेन कर्मणां नैतिकगुणानामपरोक्षानुभवः । अनुमोदनमननुमोदनं च तदभिव्यञ्जकं भवति । अनुमोदनाननुमोदनौ हि नैतिकौ भावौ, याभ्यां कर्मणां नैतिकं मूल्यं निर्णीयते ।

रसेन्द्रियवादसिद्धान्ते च सौन्दर्यबुद्धिरेव साधुत्वे कर्मणां प्रयोजिका । शेफ्ट्सवरीहचीसन-हर्बर्ट-रस्किनप्रभृतीनां महोदयानां मते सौन्दर्यमेव नैतिकतायां मानम् । तथा च यत्सुन्दरं तदेव समरसं सानुपातं च । यदेव च समरसं सानुपातं च, तदेव सत्यम् । यदेव च सुन्दरं सत्यं च, तदेव शिवम् । शिवं सुन्दरं चाभिन्नमेवेति शेफ्ट्सबरीमहोदयः । सौन्दर्यबुद्धिश्च न केवलं नैतिकतायाः सूचिका, किन्तु सा स्वत एव नैतिकतारूपिणी । कीदृशी भवतामभिरुचिरिति सूचिते 'को भवान् कीदृशश्च' इति निर्धारयाम्यहमिति रस्किनमहोदयो ब्रवीति । हर्बर्टमहोदयोऽपि शुभसुन्दरयोरभेदमेव प्रतिपादयति । अन्तःकरणमेव रसेन्द्रियं सौन्दर्योपलम्भकं वेन्द्रियं येन सहजा सौन्दर्योपलब्धिः, सैव च कर्मणां साधुत्वासाधुत्वयोरवधारणे मानमिति रसेन्द्रियवादस्याभिप्रायः ।

### अदार्शनिक-सहजज्ञानवादस्यालोचनम्

सहजज्ञानवादे ह्युद्देश्यपरिणामादिपरामर्शमन्तरैव सहजज्ञानवशात् किञ्चित् सदसद्वा कर्मेत्यवधार्यते । तादृशा निर्णया यदि न बुद्धिप्रभवास्तदा स्वेच्छाविजृम्भितमात्रत्वाद्धेयाः । यदि च परिस्थित्याद्यनुसारं निर्णये नियामकं किञ्चिदभ्युपेयते, तदा अदार्शनिकोऽयं सहजज्ञानवादो दार्शनिकीं प्रवृत्तिं प्रतिपद्यते । किञ्च, सम्भवत्यप्यन्तःकरणे

प्रातिभज्ञानवत् सदसत्त्वयोः सहजस्फुरणे आकस्मिकावभासायास्तस्याः स्फूर्तेः प्रामाण्यं दुःसम्पादम्। निर्हेतुकी विवेकविरहिता चेयं स्फूर्तिः कथं प्रामाण्यमावहेत्। प्रमाणभूतैव च सा सहजज्ञानवादेऽभ्युपेयते।

किञ्च, देशकालादिभेदेन कर्मणां प्रकृतिपरिवर्तनदर्शनादुत्सर्गापवाददर्शनाच्च कथं विश्वनराभिमानिनः ( यूनीवर्सल कान्शेन्स ) सामान्यान्तःकरणस्य निर्णयभेदस्योपपादनं सम्भवेत्। 'मा हिंस्यात् सर्वा भूतानि' इत्येकत्र अहिंसायाः 'आततायिनमायान्तं हन्यादेवाविचारयन्' इति चापरत्र हिंसाया सहजस्फूर्तेरपि दर्शनाद् विरुद्धस्फूर्तिस्थले परिणामोद्देश्यादिविचारस्यापरिहार्यत्वाद् विवेक एव कर्मणां सदसत्त्वावधारकः, न सहजज्ञानमात्रम्।

नैतिकेन्द्रियवादे च मानसिकेन अनुमोदनाननुमोदनेन वा सत्त्वमसत्त्वं वा कर्मणोऽवधार्यते। व्यक्तिभेदेन देशभेदेन कालभेदेन च कर्मणामेकरूपाणामपि विद्यतेऽनुमोदनाननुमोदनव्यवहारः। आखेटात्मकमेकमेव कर्म हिंसाप्रधाने क्षत्रियहृदयेऽनुमोदनं ब्राह्मणहृदये च तीव्रोद्वेगमयमननुमोदनं जनयति। यदि तु अनुमोदनाननुमोदनाभ्यामेव कर्मणां सदसत्त्वावधारणं तदा व्यक्तिभेदेनोभयत आक्रम्यमाणमिदं कर्म सदसद् वा किमपि न स्यात्। अत एव राशडलमहोदयेन बहुशः प्रत्याख्यातोऽयं नैतिकेन्द्रियवादसिद्धान्तः। वृषभयुद्धेन स्पेनवासिनां हृदये परमोत्साहजनिकाऽनुमोदनभावना, आङ्गलानां चाननुमोदनभावना जायते, इत्यादि चोदाहृत्य अन्तःकरणस्य निर्भ्रान्तत्वे नैतिकनिर्णयेषु भेदानुपपत्तिः, भिन्नानां नैतिकनिर्णयानां च बाह्यप्रामाण्येऽनुमोदनव्यतिरिक्तं बुद्ध्यादिरूपं प्रयोजकं तत्राभ्युपेयमिति व्युत्पादितम्।

रसेन्द्रियवादसिद्धान्ते ( एस्थैटिक सेन्स थ्योरी ) च सौन्दर्यमेव नैतिकतायां परमं मानम्। तत्र च सौन्दर्यभावनायाः सौन्दर्यांशमात्रसम्बद्धत्वादव्यापकत्वाच्च नैतिकनिर्णयानां च सर्वक्षेत्रव्यापित्वाद् राशडलमहोदयेन सौन्दर्यभावनाप्रयोज्यत्वं नैतिकनिर्णयानां प्रत्याख्यातम्। कलात्मिका कृतिरपि नैतिकनिर्णयस्य विषयभूता भवति। किञ्चिच्चित्रं नाटकं वा सौन्दर्यदृष्ट्या बहुमूल्यमपि नैतिकदृष्ट्या अदर्शनीयं भवतीति कृत्वा राजाज्ञया तत्प्रदर्शनं प्रतिषिद्धमपि भवति। तत्र च सौन्दर्यनैतिकनिर्णययोर्विरोधस्य दर्शनात् सौन्दर्यमेव नैतिकनिर्णये प्रयोजकमित्यसङ्गतम्। सौन्दर्यदृष्ट्या लब्धवर्णमपि नैतिकदृष्ट्या वचनीयतां यदापद्यते, तदुपभोगो ह्यात्महानाय कल्पत इति राशडलमहोदयस्य मतम्। तस्मान्निरपेक्षस्तर्कविधुरः सहजज्ञानवादो न नैतिकतायाः परमार्थो मानदण्डः।

## दार्शनिक-सहजज्ञानवादः ( फिलासोफीकल इण्ट्यूशन )

अदार्शनिके सहजज्ञानवादे नैतिका निर्णया अन्तःप्रज्ञाताः सहजोपलब्धिविषया अपरोक्षाश्च। दार्शनिकसहजवादे चान्तःकरणस्य स्वरूपं बुद्धिमूलकमेव। तस्मान्नैतिका निर्णयास्तत्रानुमानगम्या भवन्ति। तर्कवादो हि दार्शनिकसहजज्ञानवादस्य प्रधानो भागः। तन्मते च तर्कशक्तेरभिन्ना नैतिकी शक्तिः, सिद्धव्याप्तिकयोर्धर्मयोर्व्याप्योपलब्ध्या व्यापकं धर्ममनुसन्धत्त इति नैतिकरसेन्द्रियवादाभ्यां भिन्नोऽयमिति ॥



# एकादशः परिच्छेदः

## बुद्धिपरत्ववादः ( रेशनलिज्म )

कर्मणां नैतिकत्वव्यवस्थापनविषये सुखवादो बुद्धिपरत्ववादश्चेति द्वौ प्रधानपक्षौ। तौ च प्राचीनकालादेव प्रवृत्तौ। सुकरातस्य शिष्येषु केचन धर्मप्राधान्यवादिनः, परे च सुखप्राधान्यवादिन इति द्विविधो विभागः सञ्जातः। तत्र सुखप्राधान्यवादिनां सम्प्रदायः सिरैनिक-सम्प्रदाय इति नाम्ना, धर्मप्राधान्यवादिनां च सम्प्रदायः सिनिक्स-सम्प्रदायनाम्ना प्रसिद्धिमलभत। सिरैनिकसम्प्रदायस्य संस्थापक ऐरिस्टीपसमहोदयो यूनानदेशस्य सिरीननगराभिजन आसीदिति तत्सम्प्रदायस्तद्देशनाम्ना 'सिरैनिक'संज्ञामलभतेति स्वार्थ-मूलकसुखवादस्य निरूपणप्रसङ्गे पूर्वं प्रतिपादितम्। विगतेषु परिच्छेदेषु च सुखवाद-सिद्धान्तस्य सविस्तरं विवेचनं सञ्जातम्। द्वितीयस्य बुद्धिपरत्ववादस्य प्राचीनतमं स्वरूपं यूनानदेशस्य सिनिक्ससम्प्रदाये समुपलभ्यते। सिनिक्ससम्प्रदायो हि सुखस्य स्थाने धर्ममेव नैतिकताव्यवस्थापकं मनुते, स च तपश्चर्याप्रधानः। सिनिक्ससम्प्रदायस्य संस्थापकः 'एण्टिस्थेनीज' इति नाम्ना प्रसिद्धः। सिनिक्ससम्प्रदायानुयायिनस्तपश्चरणपरायणाः सुखस्य नितान्तं विरोधिनश्च। 'सुखमयजीवनापेक्षया उन्मत्तजीवनं मेऽधिकं रोचिष्यते' इति सिनिक्ससम्प्रदायाचार्यस्य कादाचित्कं वचनं तेषां सुखविरोधिनीं भावनां सम्यग् व्यनक्ति। अस्मिन् सम्प्रदाये डासांजिनीजनामा विख्यात आचार्यो विशिष्टां ख्यातिमलभत। अस्मादेव सम्प्रदायाद् विरक्तिमार्गानुयायी स्टोइक्स-सम्प्रदायः प्रादुर्भूतः। विरक्तिमार्गस्य आद्यप्रवर्तको जेनोमहोदयः ( ३४२–२७० ई० पू० ) स्टोआनाम्ना प्रसिद्धे स्थाने उपविश्योपदिशति स्मेति तत्सम्प्रदायः स्टोइक्सनाम्ना प्रसिद्धः। सुखवादविरोधिनो बुद्धिपरत्ववादस्य प्राचीनतमं स्वरूपं यूनानदेशे तपश्चर्यावादिनां सिनिक्स-सम्प्रदायानु-यायिनां विरक्तिमार्गानुयायिनां स्टोइक्स-सम्प्रदायवादिनां च सिद्धान्तेषु समुपलभ्यते। मध्ययुगे संन्यासवादिनो नव्ययुगे च काण्टमहोदयोऽस्य बुद्धिपरतावादस्य प्रमुख आचार्यः।

### सुखवाद-बुद्धिपरतावादयोर्भेदः ( हैडोनिज्म एण्ड रेशनलिज्म )

सुखवादो बुद्धिपरतावादश्चेत्युभौ परस्परविरोधिनौ पक्षौ। सुखवादो हि इन्द्रिय-परः पक्षः। तत्रेन्द्रियतृप्तिजन्यं सुखमेव प्रधानम्। सुखवादे आत्मतृप्तिरेव परमं मङ्गलम्, बुद्धिपरतावादे चात्मविजय एव परमं श्रेयः। सुखवादिनामिन्द्रियतृप्तिरभिमता, बुद्धि-वादिनां चेन्द्रियदमनमिति सुखवादबुद्धिपरत्ववादौ सर्वथैव परस्परविरोधिनौ पक्षौ। नव्ययुगे काण्टमहोदयेन बुद्धिपरतावादस्य स्वरूपं विशदतया निरूपितमिति तदवलम्बेन बुद्धिपरत्ववादस्य सिद्धान्तोऽत्र निरूप्यते।

### काण्टमहोदयस्य बुद्धिपरतावादः

काण्टमहोदयस्य सिद्धान्तो बुद्धिपरतावादः ( रेशनलिज्म ), कठोरतावादः, ( रिगोरिज्म ), नैतिकविशुद्धतावादः ( मारल प्यूरिज्म ), नियमानुवर्तितावादश्च

( फार्मल एथिक्स ) इत्येवमादिभिर्बहुभिः संज्ञाशब्दैर्व्यवह्रियते। स च सुखवादस्य नितान्तं विपरीतः। सुखवादो हि इन्द्रियतृप्तिपर आत्मतुष्टिप्रचारकश्च। बुद्धिपरत्ववादश्च इन्द्रियदमनपर आत्मविजयप्रचारकश्च। सुखवादो हि नैतिकं मानवस्वरूपं प्राकृतं प्रकृतिपरायणं विधत्ते, बुद्धिपरत्ववादश्च प्रकृतिपरायणं प्राकृतं मानवमाध्यात्मिकमानवरूपे विपरिणमयति। आत्मनो निम्नभावनानामिन्द्रियवासनानां तृप्तिः सुखवादस्य प्रयोजनम्, उच्चतमस्यात्मस्वरूपस्य तृप्तिर्विशुद्धं बुद्धिमयं जीवनं च बुद्धिपरतावादस्य प्रयोजनम्। आहारनिद्रादिसाम्ये बुद्धिरेव पशुमानवयोर्विभेदिका। इन्द्रियपरत्वं हि प्रधानतः पशुधर्मः। मानवस्वभावे च पशुप्रकृतेरवशेषमात्रमिन्द्रियपरत्वमिति परिष्कृतमानवस्वरूपलाभाय तदुच्छेदोऽपरिहार्यः। पशुप्रकृतिभूतामिन्द्रियपरतां विजित्य शुद्धबुद्धिमयं जीवनमेव यथार्थमानवत्वापादकम्। 'मत्वा कर्माणि सीव्यति' इति मनुष्यपदस्य व्युत्पत्तिरपि मानवजीवनस्य बुद्धिपरतामेव द्योतयति।

काण्टमहोदयस्य मते इच्छाविशेषात्मिका व्यावहारिकबुद्धिरेव नैतिकनियमस्य निर्माणं करोति, सैव च तत्परिपालनाय पुरुषं नियोजयति। नैतिकनियमपालनस्य विवेकमयीच्छैव शुभेच्छा। शुभेच्छासन्निहितं चारित्र्यमेव च निःश्रेयसरूपम्। व्यावहारिकबुद्धिर्मानवस्वभावस्य सामान्यम्, अत एव व्यापकं तत्त्वम्। तदवधारितो नैतिकनियमोऽपि तद्वदेव व्यापकः। व्यावहारिकबुद्धयैव चान्तःकरणे नैतिकनियमस्य सहजं ज्ञानं भवति। अस्मिन्नर्थे काण्टमहोदयस्य बुद्धिपरतावादः सहजज्ञानवादसदृशः। सहजज्ञानवादो नैतिकसिद्धान्तावधारणेऽन्तःकरणस्य स्फूर्तिव्यतिरिक्तं प्रमाणान्तरं न प्रस्तौति, बुद्धिपरतावादश्च तत्र दार्शनिकमाधारं प्रदर्शयतीति च सहजज्ञानवादभिन्नो बुद्धिपरतावादः।

काण्टमते नैतिका नियमा निरपेक्षा आदेशा ( कैटागारिकल इम्पैरेटिव ) निरपेक्षा विधयो वा सन्ति। ये नियमा अन्यत्र साध्यभूतास्ते सापेक्षाः, ये स्वत एव साध्याः, न तु कस्यापि साधनभूतास्ते निरपेक्षा आदेशा उच्यन्ते। स्वास्थ्यविज्ञानसम्बन्धिनो नियमाः स्वास्थ्यस्य साधनभूताः, अत एव सापेक्षा आदेशाः। आर्थिका नियमा अपि सम्पत्तिसाधनभूता इति तेऽपि सापेक्षा आदेशाः। नैतिका नियमास्तु स्वत एव पालनीयाः, न तु परोद्देश्यप्रवृत्तकृतिसाध्यत्वरूपं पारार्थ्यं तेषामभिमतम्। ते स्वत एव साध्यभूताः, न तु कस्यापि महत्तरस्योद्देश्यस्य साधनभूताः। कर्तव्यबुद्धयैव कर्तव्यं करणीयम् ( ड्यूटी फार ड्यूटीज सेक ), 'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन' इत्यनुशासनमनुसृत्य फलकामनां परित्यज्य निष्कामबुद्धया कर्तव्यपालनार्थमेव कर्तव्यस्य पालनं कर्तव्यम्। ततश्च कर्तव्यात्मका नैतिका नियमाः स्वत एव साध्यरूपाः, न त्वन्यत्र साधनभूता इति त एव निरपेक्षा आदेशा निरपेक्षा विधयो वोच्यन्ते। निरपेक्षा आदेशाः सार्वभौमा नियमा भवन्ति। सर्वैरपि पुरुषैः कर्तव्यबुद्धयैव स्वकर्तव्यस्य पालनं कर्तव्यमित्ययं सार्वभौमो नियमः। बाह्योद्देश्यस्त्वनुभवमूलकः सापेक्षं विधिमेव जनयति। कस्यापि निर्दिष्टस्य फलस्यावाप्तये निर्दिष्टा कार्यपद्धतिरङ्गीकरणीयैव। इदमेव सापेक्षविधेः स्वरूपम्। जीवनं सफलयितुं प्रयत्नो विधेय एव, स्वास्थ्यसुखस्यानुभवाय स्वास्थ्यसम्बन्धिनो नियमाः पालनीया एवेत्यादयः सापेक्षा विधयः सापेक्षा नियमाः। परोद्देश्यप्रवृत्तकृतिसाध्यमेव तेषामनुष्ठानम्। यो विशिष्टं फलं साधयितुमिच्छति, स हि तदुद्देश्येन विशिष्टं साधनमव-

लभ्यते। तानि साधनभूतानि कर्माणि सापेक्षविधिक्षेत्रवर्तीनि। नैतिका नियमास्तु स्वत एव साध्यभूताः। अत एव कर्तव्यबुद्धयैव ते पालनीयाः, न तु फलबुद्धया। 'ड्यूटी फार ड्यूटीज सेक' इत्ययमेव काण्टमहोदयस्य निर्घोषः।

काण्टमते नैतिकं जीवनं विशुद्धं बुद्धिमयं जीवनम्। भावानां मानसिकसंवेगानां च नैतिके जीवने न क्वापि स्थानम्। स्नेहसहानुभूत्योर्वशीभावोऽप्यत्रानैतिकः। मानसिकाः संवेगाः स्नेहादयो हि संवेगात्मकत्वादात्मनः स्वरूपाद् दूरं विभिद्यन्त इति विजातीयत्वान्नैतिके जीवने ते नितान्तमुपेक्षणीयाः। स्नेहवशेन सहानुभूतिवशेन वा क्रियमाणं कर्म न कदापि नैतिकीं मर्यादामध्यास्ते। मानसिकसंवेगादिभिरप्रतिहतं विशुद्धं बुद्धिमयं जीवनमेव नैतिकं जीवनम्। नैतिकं नियमं प्रति सम्मानस्य भाव एव एकमात्रो भावो यस्य नैतिके जीवने स्थितिं काण्टमहोदयोऽभ्यनुजानाति। स च सम्मानस्य भावसंवेगान्तरान्नितान्तं भिन्नः। यो हि स्नेहवशात् सहानुभूतिवशाद्वा रोगिणः परिचर्यां करोति, दरिद्राय धनं वा प्रयच्छति, काण्टमहोदयस्य मते तस्य तत्कर्म निन्दितमेव, न तु नैतिकम्। तन्मते कर्तव्यबुद्धया क्रियमाणमेव कर्म नैतिकं भवति। व्यावहारिकबुद्धयाऽवधारितनियमानुरूपं कर्त्रा च नैतिकनियमं प्रति सम्मानभावनया कर्तव्यबुद्धयाऽनुष्ठीयमानमेव कर्म सत्कर्म इति काण्टमहोदयस्याभिप्रेतम्।

सङ्कल्पस्वातन्त्र्यं (आटोनोमी आफ विल) नीतिशास्त्रस्य मूलम्। कर्तव्यबुद्धौ नैतिकबाध्यतायां चान्तर्हितं सङ्कल्पस्वातन्त्र्यम्। आत्मनो नित्यत्वमपि नीतिशास्त्रस्य प्रमुखः सिद्धान्तः। काण्टमते इच्छाया कर्तव्यस्य च विरोध एव नैतिकताया बीजम्। न च विरोधेऽस्मिन्नेकेनैव जीवनेन विजयलाभः सम्भवतीति मरणोत्तरं जीवनस्यानन्तसत्ताकाले एवात्मा विजयलाभं करोति। तस्मादात्मनो नित्यत्वमभ्युपेयमिति द्वितीयो नीतिसिद्धान्तः। ईश्वरस्यास्तित्वं विद्यत इत्ययमपि तृतीयो नीतिशास्त्रस्य सिद्धान्तः। काण्टमते शुभसङ्कल्पस्य परमशुभत्वेऽपि धर्मस्य सुखेन सह योग एव परमकल्याणस्योत्पत्तिर्भवति। स च धर्मसुखयोर्योगो नावश्यम्भावी, किन्त्वीश्वराधीनः। धर्मो ह्यात्मनिष्ठः, सुखं च बाह्यपरिस्थित्यधीनम्, तयोः संयोगश्चेश्वराधीनः। न च दृष्टजन्मवेदनीयोऽयं धर्मसुखयोः संयोगः। किन्त्वामुष्मिके मरणोत्तरजीवन एवेश्वरो धर्मं सुखेन संयुनक्ति। ईश्वर एव धर्मसुखयोः सामञ्जस्ये प्रमाणमुत्तरदाता च विद्यत इति काण्टमहोदयस्याभिप्रायः।

काण्टमहोदयेन नैतिकनियमानां स्पष्टीकरणाय कानिचित् सूत्राण्यपि निर्मितानि। तत्रेमानि त्रीणि प्रमुखानि सूत्राणि सन्ति—

१. केवलं स एव सिद्धान्तोऽनुसरणीयो यस्य सामान्यीकरणं सार्वभौमत्वं च सम्भवेत्।

२. केवलं तथैव कार्यं करणीयम्, येन स्वान्तर्वर्तिनी परान्तर्वर्तिनी वा मानवता साध्यरूपैवावतिष्ठेत, न कथञ्चिदपि साधनरूपतां व्रजेत्।

३. साध्यानां साम्राज्यस्य (किंगडम आफ एण्डस) सदस्यरूपेणैव कार्यं करणीयम्।

"यस्य सामान्यीकरणं सार्वभौमत्वं च सम्भवति, स एवानुसरणीयो विधिः" इति काण्टमहोदयस्य प्रथमं सूत्रम्। सूत्रमिदं विवृण्वता तेन वचनभङ्गस्य आत्मघातस्य चाकरणीयत्वं सामान्यीकरणासम्भवात् प्रतिपादितम्। नहि वचनभङ्गस्य सामान्यीकरणं सम्भवति। यदि सर्वोऽपि जनो वचनभङ्गं कुर्यादिति सामान्यो नियमो भवेत्, तर्हि वचनपालनमेव समाप्येत, वचनमूल्यमेव च न स्यादिति वचनभङ्गस्य सामान्यीकरणासम्भवान्न सार्वभौमत्वमित्यकरणीय एव वचनभङ्गः। एवमात्मघातस्यापि सामान्यीकरणं न सम्भवति। तस्य हि सामान्यीकरणे सर्वोऽप्यात्मघातं कुर्यादिति भवेत् सामान्यो नियमः। तथा च सर्वस्य आत्मघातपरत्वे लोक एवायमुच्छिद्येत, न कश्चिदप्यात्मघाताय अवशिष्येत। तस्मादशक्यमेव आत्मघातस्य सामान्यीकरणमिति सार्वभौमत्वासम्भवादकरणीय एवात्मघातः। 'धर्मोऽनुष्ठेयः, कर्तव्यं पालनीयम्' इत्यादिनां नैतिकनियमानां सामान्यीकरणं सार्वभौमत्वं च सम्भवतीति तेषां परिपालनं समुचितम्। ततश्च तेनैव विधिना कार्यं करणीयं यस्य सामान्यीकरणं सार्वभौमत्वं चाभीष्टं स्यादिति नैतिकतायाः प्रथमं सूत्रम्।

"तथैव सर्वैर्व्यवहर्तव्यं येन स्वान्तर्वर्तिनी परान्तर्वर्तिनी वा मानवता साध्यरूपैवावतिष्ठेत, न कथञ्चिदपि साधनरूपतां व्रजेत्" इति काण्टमहोदयस्य द्वितीयं नीतिसूत्रम्। 'मत्वा कर्माणि सीव्यति' इति व्युत्पत्तिवलाद् मननप्रधानो मानवः। बुद्धिरेव च तस्यान्यव्यावर्तकत्वादसाधारणो धर्मः, स चादरणीय एव। आत्मवत् परेषामपि मानवत्वमादरणीयमेव। साधनरूपेण मानवस्य प्रयोगोऽनादरणीयत्वमेवास्य गमयतीति साधनरूपेण मानवप्रयोगोऽत्र नाभिमतः। आत्मघातेन मानवताया अनादरो भवति। नहि मानवताया यथार्थमूल्येनानुगतो भवति तस्यात्मघातः, न चास्य साध्यरूपतया सह सङ्गच्छत इति प्रतिषिद्धो नीतिशास्त्रे। परप्रतारणे चानुष्ठीयमाने प्रतारितस्य पुरुषस्य स्वार्थसाधनायैवोपयोगः क्रियत इति मानवतायाः साध्यरूपता भज्येतेति प्रतिषिद्धमनैतिकं च प्रतारणम्। दास्यमपि मानवस्य साध्यरूपतामपहृत्य तस्य साधनरूपेण प्रयोगं कुरुत इति तदप्यनैतिकमसमीचीनं च। तस्माज्जनेन नैतिकोत्कर्षमिच्छता न स्वात्मा न वा परस्यात्मा कदाप्यवमन्तव्य इति काण्टकृतं नीतिशास्त्रस्य द्वितीयं सूत्रम्।

अस्य द्वितीयसूत्रस्य वार्त्तिकरूपमुपसूत्रमपि विरचितं काण्टमहोदयेन। तथाहि—"आत्मनः पूर्णत्वसम्पादनाय सर्वदा प्रयतितव्यम्। यतश्च परेषां पूर्णत्वसम्पादनाय न प्रभवति मानवः, तस्मादनुकूलपरिस्थितिजननद्वारेण परेषामपि सुखसाधनाय प्रयतितव्यम्" इति। पुरुषः स्वसङ्कल्पं नियन्त्रितुं नैतिकनियमानुरूपं च निर्मातुं प्रभवतीति तद्द्वारेणात्मनः पूर्णतामधिगन्तुं प्रभवति। परं स परस्य पुरुषस्य सङ्कल्पं नियन्त्रितुं नैतिकनियमानुकूलं वा निर्मातुं न प्रभवति। तस्मात् स्वप्रयत्नसाध्यैव पूर्णता, न तु परप्रयत्नस्तत्र साक्षादुपयुज्यते। परपुरुषस्तु पुरुषान्तरस्य सुखसाधनाय अनुकूलपरिस्थितिमात्रमुत्पादयितुं शक्नोति। तदर्थं च तेन सर्वात्मना प्रयत्नो विधेयः। अयमेवास्य वार्त्तिकरूपस्योपसूत्रस्याभिप्रायः काण्टमहोदयेन सम्यक् प्रदर्शितः।

"साध्यानां साम्राज्यस्य सदस्यैरिव व्यवहर्तव्यम्" इति काण्टमहोदयस्य तृतीयं नीतिसूत्रम्। मानवता साध्यरूपैवेति द्वितीयसूत्रे प्रदर्शितम्। ततश्च नैतिकनियमपालकानां

बुद्धिपराणां मानवानामादर्शसमाज एव साध्यानां साम्राज्यमिति पदाभ्यामत्राभिप्रेतः। साध्यानां नैतिकनियमपालकानामस्मिन् समाजरूपे साम्राज्ये सर्वेऽपि सदस्याः स्वनैतिकनियमस्य निर्मातार इति सर्वेऽपि सम्राजः। सर्वे च नैतिकनियमस्य पालका इति प्रजाजनाश्च। यस्मिन् समाजात्मके साम्राज्ये सर्वेऽपि राजानः सर्वेऽपि च प्रजाजनास्तत्र सर्वेऽपि पूर्णसामञ्जस्येन निवसन्तीति सर्वे परस्परमाद्रियन्ते, यथायोग्यं च व्यवहरन्ति। यथा यथा च परस्परं सहयोगस्य सदिच्छायाश्चोत्कर्षस्तथा तथा शान्तिलाभो व्यक्तिगतस्वतन्त्रतायाः प्रभुत्वस्य चाभिवृद्धिर्भवति।

## काण्टमहोदयस्य सिद्धान्तानामालोचनम्

काण्टमहोदयस्य सिद्धान्ते ऐन्द्रियकानुभूतेर्बुद्धेश्च विरोधो दर्शितः। इन्द्रियानुभूतिमुत्साद्यैव बुद्धिपरताया आत्मलाभः। स एष सिद्धान्तो मनोवैज्ञानिकद्वन्द्वात्मक (साइकोलॉजिकल डुअलिज्म) इत्युच्यते। वस्तुतस्तु बुद्धिरनुभूतिश्चोभे अप्यपरिहार्ये। नहि केवला बुद्धिपरता न वा ऐकान्तिकी इन्द्रियपरता आत्मनः पूर्णतां साधयति। इन्द्रियानुभूतिरेवेच्छां जनयति, इच्छा च क्रियामुत्पादयति। यदि नामेन्द्रियानुभूतिः सर्वथैवोच्छिद्येत, नहि क्रियाऽपि जातुचिदात्मानं लभेत। ततश्चेन्द्रियबुद्धिपरतयोर्योऽयं विरोधोऽत्र काण्टमहोदयेन प्रदर्शितः, तस्य सार्वभौमत्वे सामान्यीकरणे वा क्रियैवात्यन्तमुच्छिद्येतेति सामान्यीकरणासम्भवादसमीचीनोऽयं विरोधसिद्धान्तः। परमार्थतस्तु बुद्धिरिन्द्रियानुभूतेः परिमार्जिका। इन्द्रियानुभूतिजन्यो रागद्वेषात्मकोऽनुकूलः प्रतिकूलो वा य आत्मनि प्रभावः, स एव बुद्ध्या नियम्यते। तत्परिमार्जनमेव च धर्मस्य विषयः। इन्द्रियानुभूतेरत्यन्तोच्छेदे तु बुद्धिरपि समूलकाषं कषिता भवति।

इन्द्रियानुभूतिर्हि अनुभवात्मकं वस्तु प्रस्तौति, बुद्धिश्च तत्र नैतिकनियमानुरूपमाकारमुत्पादयतीति काण्टमहोदयस्य सिद्धान्तो 'नियमानुवर्तितावादः' (फार्मेलिज्म) इत्यप्यभिधीयते। यदि नामेन्द्रियानुभूतिस्तज्जन्याश्चेच्छाः सर्वथैवोच्छिद्यन्ते, क्वाकारं बुद्धिरुत्पादयिष्यति ? अत एव जैकोबीमहोदयः काण्टमहोदयस्येदृशं वस्तुशून्यं सङ्कल्पमुद्दिश्य 'स तादृशः सङ्कल्पो यः किमपि वस्तु न सङ्कल्पयति' इत्युपालम्भवाक्यं प्रयुङ्क्ते। ततश्च बुद्धिरिन्द्रियानुभूतेर्वासनानां च परिमार्जिकैव नात्यन्तं विरोधिनी चेत्यभ्युपेयम्। तस्मादिन्द्रियानुभूतिबुद्धिपरत्वयोरैकान्तिको विरोधो न सङ्गच्छते।

किञ्च, काण्टमहोदयस्य प्रथमं नीतिसूत्रमप्यापातरमणीयम्। यस्य सामान्यीकरणं सार्वभौमत्वं च सम्भवति, स एव नीतिव्यवस्थापकोऽनुसरणीयश्च सिद्धान्त इति तथ्यमेव। परमैकान्तिकत्वेनास्मिन् नियमेऽभ्युपगम्यमाने भूयाननर्थोऽपि सम्भवेत्। नैष्ठिकब्रह्मचर्यस्य पालनं प्रशस्तमनुसरणीयं च कर्मेति सर्वसम्मतं निर्विवादं च। किन्तु सार्वभौमत्वं सामान्यीकरणं चास्य न सम्भाव्यते। यदि सर्वेऽपि नैष्ठिका ब्रह्मचारिणः स्युस्तदा अपत्योत्पादकस्य गृहस्थस्याभावाद् द्रुतमेव मानवजातेर्विलोपः प्रसज्येत। ततश्च मानवमात्रस्याभावाद् ब्रह्मचर्यपालनमपि नोपपद्येत। एवं काण्टमहोदयस्य प्रथमसूत्रानुसारं ब्रह्मचर्यपालनमपि विगर्हितम्। परोपकारो दरिद्रेभ्यो धनप्रदानमपि चैतेन विधिना कर्तव्यकोटिं नावगाहते। अनवरतं प्रदीयमाने धने न कश्चिद् दरिद्रोऽवशिष्येत। तस्मादचिरेणैव धनप्रदानं

विलुप्येत। अनवरतं च क्रियमाणे परोपकारेऽल्पीयसैवानेहसा उपकार्याभावादुपकारोच्छेदापत्तिरिति काण्टमहोदयस्य प्रथमे सूत्रे ऐकान्तिकत्वेनाभ्युपगम्यमाने ब्रह्मचर्य-दान-परोपकारादीनामपि सार्वभौमत्वासम्भवात् सामान्यीकरणस्याशक्यत्वाच्च अननुष्ठेयत्वं प्रसज्यते। तच्चानिष्टमिति नेदमदुष्टं सूत्रम्, न चास्यैकान्तिकोऽभ्युपगमः श्रेयान्।

अस्मद्व्यवहारे मानवता सदा साध्यरूपैवावतिष्ठेत, न कदाचिदपि साधनरूपतां व्रजेदिति काण्टमहोदयस्य द्वितीयं सूत्रम्। इदमपि सूत्रमेकं समीचीनं सिद्धान्तं निरूपयति। मानवता ह्यस्माभिः सदैवादरणीया। स्वार्थस्य परार्थस्य वा साधनतामुपनीय परात्मा स्वात्मा वा न जातुचिदवमन्तव्यः। अयं समीचीनः सिद्धान्तः सूत्रस्यास्य सारांशभूत इति नात्र कस्यापि विप्रतिपत्तिः सम्भवति। तथापि नायमैकान्तिको नियमः। देशस्वातन्त्र्यादिरूपस्य कस्यचिन्महतः प्रयोजनस्य साधनाय ये महात्मान आत्मानमर्पयन्ति, ते साध्यरूपतामात्मनो विहाय साधनरूपतामेवाङ्गीकुर्वन्ति। तथापि जीवनं कृत्यं च तेषामादर्शरूपतयाऽनुसरणीयमेव, न कथमपि वचनीयतामर्हति। किञ्च, साधनरूपतायाः सर्वथैवाभावे साध्यमपि कथं नाम साध्यं भवेत्? सापेक्षौ हि साध्यसाधनशब्दौ, साधनापेक्षयैव साध्यस्यात्मपदलाभः। न चासति साधने साध्यमपि सिद्ध्येत्। तस्मादनैकान्तिकमिदं सूत्रम्, अनैकान्तिकश्चायं साध्यमात्रतासिद्धान्तः।

यच्च द्वितीयसूत्रस्य वार्त्तिकरूपमुपसूत्रं विरचितम्, तदपि नैतेन साध्यतासिद्धान्तेन सङ्गच्छते। सर्वैरात्मनः पूर्णत्वसम्पादनाय प्रयतितव्यम्, परस्य पूर्णत्वं च न परप्रयत्नसाध्यमिति परिस्थितीनामानुकूल्योत्पादनेन परस्य सुखसाधनाय प्रयतितव्यमिति साधनरूपतामात्मनोऽनङ्गीकुर्वतां कथं परसुखसाधनत्वं सम्भवेत्? ततश्च परेषां सुखसाधनाय प्रयतितव्यमित्यभ्युपगम्यमाने नात्मनः साध्यरूपता, साध्यरूपतायां चात्मनोऽभ्युपगतायां न परसुखसाधनत्वमित्युभयतः पाशा रज्जुरिति। किञ्चास्मिन् सूत्रे काण्टमहोदयस्य सिद्धान्तः स्वमर्यादामतिक्रम्य परसुखवादस्यात्मपूर्णतावादस्य वा सिद्धान्तान्तरस्य सीमानमधिगच्छति।

तृतीयमपि सूत्रमपूर्णमेव। साध्यानां साम्राज्यस्य सदस्यैरिवास्माभिर्व्यवहर्तव्यमित्यस्य नियमस्याभिप्रायः समीचीन एव। सर्वैः परस्यादरो विधेयः, सहयोगेन सामञ्जस्येन च व्यवहर्तव्यमिति सर्वं समीचीनमेव, तथापि साध्यानामैकान्तिकं साम्राज्यमसम्भाव्यमेव। साध्यसाधनोभयरूपतां विना नायं लोकव्यवहारो निर्वहतीति साधनरूपताऽपि जनस्यावश्यमभ्युपगन्तव्या, न केवलं साध्यरूपतैव। तस्मात् साध्यानां साम्राज्यमप्यनैकान्तिकमेव।

किञ्च, काण्टमहोदयस्य सिद्धान्ते स्नेहसहानुभूतिप्रभृतीनां मनोवेगानामपि नैतिके जीवने स्थानं नाभिमतम्। स्नेहसमवेदनादिप्रेरितं परोपकारात्मकमपि कर्म तन्मते विगर्हितमेव। अयमपि काण्टमते महान् दोषः। कर्तव्यबुद्ध्या क्रियमाणमपि स्नेहशून्यं कर्म प्रायो न जनेभ्यो रोचते। स्नेहभावनया च क्रियमाणं तदेव कर्म लोकस्य सुखाय सन्तोषाय च कल्पत इत्ययं लोकानुभवः। ततश्च स्नेहभावनया क्रियमाणं कर्म परमार्थतो न विगर्हितम्, किन्तु प्रशंसार्हमेव। नैतिकजीवनात् स्नेहादिभावनां बहिष्कृत्य काण्टमहोदयः परोपकारादिकमपि कर्म बलप्रयुक्तमिव नीरसं विदधाति। कर्तव्यबुद्ध्या कर्तव्यपालनेऽपि राजाज्ञेव कर्तव्यबुद्धिर्विरसतामुत्पादयतीति सहजबुद्ध्यैव कर्तव्यपालनं रोचते जनाय। नैतिकनियमं

प्रति सम्मानभावनया क्रियमाणकर्मापेक्षया च स्नेहादिभावातिरेकेण क्रियमाणं कर्म श्लाघनीयं भवति। किञ्च, नैतिकनियमानामपवादाः काण्टमहोदयस्य मतेऽसह्या एवेत्यपरो दोषस्तन्मते। सर्वेऽपि नियमाः सापवादा एव भवन्ति। अपवादरूपत्वादेव कानिचित् कर्माणि श्लाघनीयतामासादयन्ति। यथा हि नैष्ठिकब्रह्मचर्यस्य पालनमपवादरूपतयैव श्लाघ्यम्। सर्वेऽपि जना यदनुष्ठातुं शक्नुवन्ति, तदनुष्ठाने का वा श्लाघा ?

## त्यागवादस्य विरोधाभासः ( पैरोडाक्स आफ एसैर्दिसिज्म )

काण्टमहोदयस्य मते इच्छानां प्रलोभनप्रतिरोधयोरनुलोमानुपातेन कर्मणामुत्कर्षानुपातः। इच्छायाः प्रलोभने तत्प्रतिरोधे च यावानुग्रो विरोधस्तावानेव कर्तव्यस्योत्कर्षः। नैतिकजीवनस्य नैरन्तर्यरक्षणाय चास्य विरोधस्यापि नैरन्तर्यमपेक्षितमिति धर्मस्य पुण्यस्य चात्मलाभाय नैतिकजीवनसम्पत्तये च बुद्धिवासनयोः प्रलोभनप्रतिरोधयोर्वा विरोधोऽयमपरिहार्यः, तदवसाने च नैतिकजीवनस्यापि परिसमाप्तिरित्ययं त्यागवादस्य विरोधाभासः काण्टमहोदयस्य मते समापतति।

किञ्च, नैतिकनियमं प्रति सम्मानभावनया क्रियमाणमेव कर्म सत्कर्म भवतीति काण्टमहोदयस्य सिद्धान्ता नैतिकनियमाश्च निरपेक्षा आदेशाः। न किमपि प्रयोजनविशेषमुद्दिश्य तेषां परिपालनम्, किन्तु कर्तव्यबुद्ध्यैव कर्तव्यस्य पालनम् ( ड्यूटी फार ड्यूटीज सेक ) इति च काण्टमहोदयस्य सिद्धान्तः। उभयमप्येतदयथार्थमनुचितं च। जैकोवीमहोदयस्य मते नियमो न नियमार्थं निर्मीयते, किन्तु प्रयोजनविशेषार्थं मनुष्यार्थं वा निर्मीयते। यः कश्चिदपि नियमो भवति, तस्य किमपि साध्यं प्रयोजनं चावश्यं भवति। तदुद्देश्येनैव च पुरुषस्तं परिपालयति। मानवो हि विचारशीलः प्राणी। 'प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते' इति। निरुद्देश्यस्य निरपेक्षादेशस्य परिपालने कथमिव प्रवर्तेत विचारशीलो विवेकयुक्तश्च मानवः ? इत्युद्देश्यविधुरे निरपेक्षे विधौ प्रवृत्त्यनुपपत्तिरपि काण्टसिद्धान्ते प्रसज्यते। किञ्च, कर्तव्यबुद्धिरेव कर्तव्यप्रेरिकेति च हीनस्तरीयः सिद्धान्तः। नैतिकजीवनस्य हीनावस्थायामेव कर्तव्यबुद्धिप्रेरणामपेक्षते जनः। समधिगते तु नैतिकजीवनस्य विकासे स्वत एव कर्तव्ये प्रवर्तते, न तु प्रेरकान्तरमपेक्षत इति वस्तुस्थितिः। ततश्च कर्तव्यबुद्धिप्रेरणामूलकत्वात् काण्टमहोदयस्य नैतिकं जीवनं हीनस्तरीयमेवेत्यवगम्यते।

किञ्च, सेथ-म्यूरहैडप्रभृतीनां मते काण्टमहोदयस्य सिद्धान्तो व्यक्तिमात्रपरः ( इण्डिविजुअलिज्म ) प्रतीयते। स्नेहसमवेदनादयो भावा एव व्यक्तीनां परस्परसम्बन्धे प्रयोजकाः। न च काण्टाभिमते नैतिके जीवने तेषां क्वचिदपि स्थानमिति तत्सिद्धान्तस्य व्यक्तिवादरूपतैवावसीयते। साध्यानां साम्राज्यमित्यत्र चापेक्षितः सहयोगः स्नेहभावनामन्तरा न सम्भवतीति परस्परविरोधोऽपि सिद्धान्तेऽत्र समापततीत्येवमादयो बहवो दोषाः काण्टमते सन्ति। तथापि बुद्धेर्नैतिकजीवनस्य नियामकत्वं व्यक्तिगौरवत्वादिकं चानेन वादेन स्थापितमित्येवमादयो गुणा अपि तस्य नोपेक्षणीयाः॥



# द्वादशः परिच्छेदः

## आत्मपूर्णतावादः—व्यक्तित्वस्य नीतिशास्त्रम् ( ऐथिक्स ऑफ पर्सनॉलिटी )

### आत्मानुभूतेर्नीतिशास्त्रम् ( ऐथिक्स आफ सेल्फ रिअलाइजेशन )

सुखवादिनां मते इन्द्रियपरो बुद्धिवादिनां च मते बुद्धिपर एव आत्मा । परमार्थतस्तु स न केवलमिन्द्रियपरो नापि बुद्धिपरः, किन्तु तदुभयमप्यात्मनः स्वरूपभूतम् । उभयोरपि सामञ्जस्यैनैवात्मनः पूर्णता । इच्छानां वासनानां च बुद्धया नियन्त्रणे कृते सति सामञ्जस्यमुभयोः सिद्धयति । सुखवादिनः सुखमात्रं बुद्धिपरतावादिनश्च तद्विलोपमेव निःश्रेयसं मन्वते । आत्मपूर्णतावादे उभयोरपि सामञ्जस्ये एवात्मलाभो निःश्रेयसाधिगमश्च । हीनतरा उच्चतरा चेति द्विविधा मानवप्रकृतिः । वासनामयी इन्द्रियभोगपरा हीनप्रकृतिः, विवेकमयी बुद्धिप्रधाना चोच्चतरा प्रकृतिः । बुद्धिमयं जीवनमेव सामान्यं सामाजिकं जीवनं जायते । यावन्मानवा वासनानां दासास्तावत्तेपामन्योन्यविरोधाः । यदा तु ते बुद्धिप्रयोगेण पाशवप्रवृत्तिं नियमयन्ति, सर्वत्र चात्मसादृश्यं बुद्धिनेत्रेणावलोकयन्ति, तदा विरोधो विलयं याति । निर्वृत्तिघनश्च स्नेहः समुद्भवति, येन मानवमात्रे तुल्ययोगक्षेममनुभवति मानवः । तदैवादर्शस्वरूपस्य आत्मनो लाभः । आत्मवत् सर्वभूतेषु यः पश्यति, स एवादर्श आत्मा । सङ्कीर्णं वैयक्तिकं स्वार्थमयं स्वरूपं परित्यज्य व्यापकस्यात्मस्वरूपस्यानुभूतिरेवात्मलाभ आत्मसाक्षात्कारश्चोच्यते । सर्वभूतमयस्यात्मस्वरूपस्य साक्षात्कार एव "यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति । सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥" इति, "तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इति च निःश्रेयसाधिगमो भवतीत्युक्तम् । अयमेव सिद्धान्त आत्मपूर्णतावादः ( परफैक्शनिज्म ), आत्मप्रसादवादः ( ऐडोमोनिज्म ), व्यक्तित्वस्य नीतिशास्त्रम्, ( ऐथिक्स आफ पर्सनालिटी ), आत्मानुभूतेर्नीतिशास्त्रम् ( ऐथिक्स ऑफ सेल्फ रिअलाइजेशन ) इत्येवमादिभिः शब्दैर्बहुधा व्यवह्रियते ।

तदेवं व्यष्टिरूपस्य समष्टिरूपतया सङ्कीर्णस्य व्यक्तित्वस्य सर्वभूतगतत्वेन वा विकास एव आत्मविकास आत्मलाभो वाऽत्राभिप्रेतः । स च विकास आत्मनिष्ठानामपरिमितानां शक्तीनां विकाससामर्थ्यादेव जायते । किन्तु सर्वासां शक्तीनामेकत्र चरमोत्कर्षो न सम्भवी । नह्येक एव पुरुषो महान् पण्डितः, योद्धा, कविः, चित्रकारः, सङ्गीतज्ञः, राजनीतिज्ञश्च भवितुमर्हति । पुरुषभेदेन तु सर्वेषां गुणानां चरमोत्कर्षलाभे न कश्चिद् विरोधः । अत एव स्वशक्तिक्षेत्रं प्रत्यभिज्ञाय तद्विकासाय सर्वात्मना प्रवृत्तस्य सुलभो भवति विकासः । 'मम स्थानं तदनुकूलं कर्तव्यं च' इति ब्रेडलेमहोदयस्य, 'त्वं कुत्र क्षमोऽसीति प्रत्यभिज्ञाय हरक्यूलीसवत् तत्र प्रयतस्व' इति कार्लाइलमहोदयस्य च वचनानुरोधेन आत्मशक्तीनां विकासेनात्मलाभः सम्पादनीयः ।

## सुखमानन्दश्च ( प्लेजर एण्ड हैपीनेस )

आत्मनो व्यापकत्वं पूर्णत्वं च साक्षात्कुर्वतो जनस्यात्मलाभादानन्दानुभूतिर्जायते। आनन्दश्च सुखाद् विभिन्नः। स चात्मलाभस्याविनाभूतोऽपि न स्वतः पुरुषार्थभूतः, आत्मलाभस्यैव तत्र पुरुषार्थरूपत्वात्। आत्मलाभश्चेन्द्रियवृत्तीनां बुद्ध्या नियमनेनैव जायते। सुखवादे सुखमात्रस्य, आत्मपूर्णतावादे चानन्दहेतुभूतस्य आत्मलाभस्य पुरुषार्थत्वम्। क्षणिकानामैन्द्रियवासनानां तृप्तिः सुखमुपजनयति, इन्द्रियवासनानामिच्छानां नियमनेन संयमेन चानन्दस्य समुद्भवः। इन्द्रियतृप्तिजन्यं क्षणिकं सुखम्, इन्द्रियसंयमदमनजन्यश्च स्थिर आनन्दः। इन्द्रियजन्यं सुखम्, बुद्धिजन्यश्चानन्द इति सुखानन्दयोर्भेदोऽप्यत्र आत्मपूर्णतावादेऽभिप्रेतः। आत्मलाभ एव चानन्दस्य जनकः।

स चात्मलाभो वस्तुत आत्मत्यागादेव भवतीति ( सेल्फ रिअलाइजेशन थ्रू सेल्फ सैक्रीफाइस ) आत्मपूर्णतावादिनां सिद्धान्तः। तस्यायमभिप्रायो यदादर्शभूतस्य बुद्धिमयस्यात्मनः स्वरूपस्य लाभाय स्वार्थमयस्येन्द्रियपरस्य स्वरूपस्य परित्यागोऽपरिहार्यः। क्षुद्रस्य सङ्कीर्णस्य च व्यक्तिगतस्य स्वरूपस्य परित्यागेनैव सर्वभूतात्मकस्य व्यापकस्यात्मस्वरूपस्य लाभो भवतीति क्षुद्रात्मपरित्यागलभ्य एव यथार्थ आत्मा। यदा सङ्कीर्णां वैयक्तिकभावनां परित्यज्य सर्वभूतगतमात्मानमभिपश्यति, तदैव परमार्थमात्मानं लभते, तज्जन्यं चानन्दमनुभवति लोकः। हेगलमहोदयो ह्यात्मपूर्णतावादस्य समर्थकः। 'जीवनाय म्रियताम्' ( डाई टु लिव ) इति मध्यकालिकं खिर्ष्टीयं सूत्रम्। देहत्यागेनाध्यात्मिकं नित्यं जीवनं लभ्यत इति तस्य सूत्रस्य खिष्टाभिमतं व्याख्यानम्—आत्मनो मुक्तिलाभाय देहः शूलमारोप्यतामिति व्याख्यानम्। हेगलमहोदयेन चात्मपूर्णतासिद्धान्तमभिलक्ष्य विश्वात्मभूतस्य व्यापकस्यात्मस्वरूपस्य लाभाय सङ्कीर्णस्य वैयक्तिकस्वरूपस्य मृत्युरभिप्रेत इत्यन्यथैव व्याख्यातं तत्सूत्रम्। तत्रापि मृत्युपदेन सङ्कीर्णस्येन्द्रियपरस्य जीवनस्य विनाशो नाभिमतः, किन्तु बुद्धिकृतं नियन्त्रणमेवाभिमतम्। तथा च हेगलमहोदयस्य मते उच्चतरस्य जीवनस्य लाभाय इन्द्रियपरत्वस्यात्यन्तोच्छेदस्य स्थाने बुद्ध्या तस्य नियन्त्रणं परिष्कारश्चाभिमतम्।

किञ्च, 'व्यक्तिरूपं प्रपद्यस्व' ( बी ए पर्सन ) इत्यपरमपि तात्त्विकं हेगलसूत्रम्। तत्रापि वासनानां परिष्कारेणोच्चतरस्य जीवनस्य सम्पादनमेव व्यक्तित्वलाभेनाभिप्रेतम्। व्यक्तित्वं स्वत एव साध्यम्, न तु साधनभूतमपरस्य, तदेवोच्चतमं लक्ष्यमिति व्यक्तित्वनिर्माणाय सर्वात्मना प्रयतितव्यम्। तथा चोच्चतमं व्यक्तित्वं प्रपद्यताम्, आद्रियतां च परेषां व्यक्तित्वमिति हेगलमहोदयस्यात्राभिप्रायः। हेगलमहोदयस्य मतमेव ग्रीन-ब्रेडले-बोसन्केप्रभृतिभिर्दार्शनिकैरपि समर्थितम्।

तत्र ग्रीनमहोदयस्य मते प्रकृतावन्तःप्रोतं व्यापकं नित्यमाध्यात्मिकं तत्त्वम्। तस्यैव व्यापकस्य नित्यस्यात्मनोंऽशभूताः परिच्छिन्नाश्च जीवाः। चरित्रविकासनमुखेन परिच्छिन्नं सङ्कीर्णमात्मस्वरूपं परित्यज्य सर्वभूतात्मकेन ब्रह्मरूपेणाभेदोऽपरिच्छिन्नतालाभश्च जीवस्य निःश्रेयसाय कल्पते। बुद्ध्या वासनानां नियन्त्रणं परिष्कारश्च वैश्वानराभिमतस्यात्मस्वरूपस्याधिगमे हेतुः।

ब्रेडलेमहोदयस्य मते सर्वेऽपि जनाः समाजे निर्धारितं स्थानं कर्तव्यं चाधिगच्छन्ति। सर्वस्यापि समाजे नियतं भवति स्थानम्, तदनुरूपं च कर्तव्यम्। तस्य सम्यक् परिपालनेनैव तेषामात्मलाभः सम्भवति, नान्यथा। व्यवस्थिते समाजे निर्धारितं स्वकर्तव्यं परिपाल्यैव आत्मानन्दमनुभवति लोकः। बोसन्केमहोदयस्य च मते सत्यं शिवं सुन्दरं च जीवनस्य सर्वोच्चं मूल्यम्। सङ्कीर्णमात्मस्वरूपं परित्यज्य सर्वभूतात्मकं व्यापकमात्मस्वरूपमनुसन्दधद्भिरेव सर्वोच्चं मूल्यमधिगम्यते। एवं हेगेल-ग्रीन-ब्रेडले-बोसन्केप्रभृतीनां मतं व्यक्तित्वस्य नीतिशास्त्रमात्मपूर्णतावादो वाऽभिधीयते।

## आत्मपूर्णतावादो नैतिकं मानान्तरं च

## ( परफैक्शनिज्म एण्ड अदर मारल स्टैण्डर्ड्स )

आत्मपूर्णतावादः सुखवाद-बुद्धिवादयोर्विरोधं परिहृत्य विषयव्यवस्थया तयोरविरोधमापादयति। तत्रेन्द्रियपरत्वमपि मानवस्वभावस्यावश्यको भागो नात्यन्तमुपेक्षणीयत्वं बाध्यत्वं वाऽर्हतीति स्वीकरणात् सुखवादस्य साधर्म्यम्। सुखवादे सुखमेव नैतिकं मानम्, आत्मपूर्णतावादे चात्मविकासजन्य आनन्दः सदाचारस्य सूचकः। सुखमचिरस्थायि वासनातृप्तिजन्यम्, इच्छापरिष्कारजन्यो वासनासामञ्जस्यसमुद्भूतश्चिरस्थायी चानन्द इति तयोर्भेदः।

आत्मसुखवादे व्यक्तिगतं सुखमेव निःश्रेयसरूपम्, परसुखवादे बहुजनहितं बहुजनसुखं च निःश्रेयसरूपम्, आत्मपूर्णतावादे च सर्वभूतमयस्य व्यापकस्यात्मस्वरूपस्योपलब्धिरेव व्यक्तेः परमोत्कर्ष इत्यभ्युपगमात् स्वपरसुखयोरैक्यमभेदश्चेति ताभ्यां सारूप्यं वैरूप्यं च।

विकासात्मकसुखवादेऽन्योन्याश्रितानां व्यक्तीनां समुदायभूतो शरीररूपश्च समाजः। आत्मपूर्णतावादे चात्मचेतनायुक्तानां व्यक्तीनां सङ्घटनात्मकः समाजः, यत्र व्यक्तयः सङ्कीर्णं वैयक्तिकं स्वरूपमुत्सृज्य समृद्धेन व्यापकेन च सर्वभूतमयेन वैश्वानरात्मकेन विश्वात्मना सहैक्यमधिगच्छन्ति, परमानन्दहेतुभूतं चात्मानं लभन्ते।

मानवदेहे बुद्धेरुत्कर्षव्यवस्थापकत्वेन पूर्णतावादो बुद्धिपरतावादस्य समर्थकः। इन्द्रियपरत्वस्य विनाश्यत्वमनभ्युपेत्य बुद्ध्या नियन्त्रणं परिष्कारं चैन्द्रियकवासनानां स्वीकरोतीति च बुद्धिपरतावादाद् भिन्न आत्मपूर्णतावादः।

आत्मपूर्णतावादो नैतिकगुणस्य अनुपमत्वमविश्लेष्यत्वं चाभ्युपैतीत्यपरोक्षज्ञानवादेन सह तस्यैक्यम्। किन्तु नैतिको नियम आत्मविकासस्य साधनमात्रम्, न तु साध्यरूपमिति तस्माद् भेदः।

एवमात्मपूर्णतावादे सर्वेषामपि नैतिकनिर्णयस्य सिद्धान्तानामुपादेयो यथार्थश्चांशोऽन्तर्भाव्यते। मूल्यानां विचारेण च तद्गर्भितानां तत्त्वानां परिस्फुटत्वं सञ्जायते।



# त्रयोदशः परिच्छेदः

## शक्तिपरं नीतिशास्त्रम्

निट्शेमहोदयस्य नीतिशास्त्रं विजिगीषाप्रधानशक्त्यपेक्षं प्रभुत्वेच्छासम्पन्नं च ( ऐथिक्स आफ विल टु पावर ) विद्यते। हर्बर्टस्पेन्सरवत् तदीयमपि नीतिशास्त्रं योग्यतमस्य विजयं ( सरवाइवल ऑफ दि फिटेस्ट ) प्राकृतिकनिर्वाचनं ( नैचुरल सलेक्शन ) च डार्विनमहोदयाभिमतं जीवशास्त्रीयं सिद्धान्तमवलम्ब्य प्रतिष्ठितम्। शक्तेरिच्छैव तन्मते जीवनस्य तत्त्वम्। स्वप्रभुत्वमात्मनोऽभिवृद्धिरात्मसमृद्धिश्च जीवनस्य लक्ष्यम्। प्रभुत्वसङ्घर्ष एव विकासस्य प्रथमः सिद्धान्तो न तु जीवनसङ्घर्षः। यदेव मानवहृदये विजिगीषामुपजनयति, प्रभुत्वेच्छामुत्पादयति, परमार्थतः शक्तिमभिवर्धयति च, तदेव सत्कर्म। तद्विपरीतं दयाजन्यं दौर्बल्यसमुद्भवं प्रतिहिंसाप्रवणं शक्तिक्षयकरमसत्कर्म। जीवनस्य प्रगतिकारकमधिकारवर्धकं च शुभम्, तद्ध्रासजनकं चाशुभं कर्म। वीरो योग्यः कुशलश्च पुरुषः श्रेष्ठः, कातरोऽयोग्यश्च कापुरुषः। एवं च 'वीरभोग्या वसुन्धरा' इत्येव निट्शेमहोदयस्याभिप्रेतम्।

निट्शेमहोदयस्य मते नीतिशून्यता धर्महीनता च ( ए मॉरेलिटी ऑफ दि वर्ल्ड ) विश्वस्याभिमता। जगदिदं स्वार्थप्रधानं शक्त्युपासकं चेति धर्मशास्त्राभिमता नीतिशास्त्रप्रतिपादिताश्च गुणा अत्र गौणा एव। नैतिकादर्शशून्या नैतिकतथ्यविरहिताश्च सर्वेऽपि लोकव्यवहाराः। तथ्यानां वस्तुवृत्तानां नैतिकं व्याख्यानमात्रं विधीयते। नैतिकताऽपि सापेक्षैव, न तु त्रैकालिकी नित्या च काचिद् भावना। यदेव कर्मैकस्मिन् काले देशे वा शुभमभिनन्दनीयमनुकरणीयं च मन्यते, तदेव कालान्तरे देशान्तरे वा वचनीयतां विगर्हणीयतां चापद्यते। तस्मान्न किञ्चिदपि कर्म स्वतः शुभमशुभं वा, देशकालाधीनं सामाजिकवातावरणाधीनं च कर्मणामुपादेयत्वमनुपादेयत्वं वा।

किञ्च, पराभिमते सङ्कल्पस्वातन्त्र्ये कर्मस्वातन्त्र्ये च न विश्वसिति निट्शेमहोदयः। कार्यकारणश्रृङ्खलानिगडितानि परिस्थित्यायत्तानि वंशक्रमाधीनानि च सर्वाणि लोककर्माणि, न तु कर्तुरिच्छामात्रायत्तानि। कर्मस्वातन्त्र्याभ्युपगमे कर्मणां सङ्कल्पानां च हेतुभूताः परमाणवोऽपि स्वीकार्याः। तस्मात् कार्यकारणपरम्पराविरोधादुपेक्षणीय एवं कर्मस्वातन्त्र्यसिद्धान्तः। सङ्कल्पस्वातन्त्र्यस्य विश्वासो मानवस्याहङ्कारभावनाजन्यो निरर्थकोऽन्धविश्वास एव। सर्वमपि कार्यजातं नियतिनिरुद्धमवश्यम्भावि च नास्यावश्यम्भाविता कथमप्यपनेतुं शक्या। नियतिनिरुद्धं कार्यकारणश्रृङ्खलानिगडितं चावश्यम्भावि कर्म। तस्मादहङ्कारमूलको विश्वास एव सङ्कल्पस्वातन्त्र्यसिद्धान्तः।

कर्मणां नैतिकं मूल्यं प्रकारद्वयेनावधार्यते। तत्रैको धर्मप्रधानः, परश्च शक्तिप्रधानः प्रकारः। निट्शेमहोदयो धर्मप्रधानं प्रकारं दासनीतिशब्देन ( मारैलिटी आफ स्लेव्स ) शक्तिप्रधानं च प्रकारं प्रभुनीतिशब्देन ( मारैलिटी आफ मास्टर्स ) व्यवहरति। एक

उपयोगितासिद्धान्तः, परश्च शक्तिसिद्धान्तः। एको ब्रह्मप्रधानः, परश्च क्षात्रप्रधानः। 'धर्मेण हीनाः पशुभिः समानाः' इति दासनीतेः सिद्धान्तः, 'वीरभोग्या वसुन्धरा' इति च प्रभुनीतेः सिद्धान्तः। यहूदीयाः खिष्टीयाश्च प्रथमस्य, रोमदेशीयाश्चोत्तरस्यानुयायिनः। दासनीतौ वलस्थाने चातुर्यं स्थापितम्, दार्ढ्यस्थानं दययाऽधिकृतम्, नेतृत्वस्थाने अनुकरणमभिषिक्तम्, अहङ्कारस्थानेऽन्तःकरणमायातम्, भयस्थाने च शान्तिः समुदिता। ईसामहोदयेन बुद्धदेवेन च दासनीतिः पराकाष्ठां नीता। तन्मते सर्वेषामपि मानवानां समानमेव मूल्यमधिकारश्च। खिष्टीयैः सिद्धान्तैरेव प्रजातन्त्रवादस्य, उपयोगितावादस्य, समाजवादस्य च दिग्दर्शिता। निट्शेमहोदयस्य मते प्रजातन्त्रवादी नारीवादसदृशः पतितानां मानवानां सिद्धान्तः, येन मेरुदण्डविरहितेव सञ्जाता मानवजातिः। अत एव प्रजातन्त्रवादं समूलमुच्छिद्य तत्स्थाने वीरतन्त्रवादोऽभिषेचयितव्यः। विनयसौजन्य-परोपकारपरायणा दासनीतिः समूलकाषं कषणीया। जीवनसाफल्याय बलमेवापेक्ष्यते, न सदाचारः; अहङ्कार एवोपयुज्यते, न विनयः; प्रौढबुद्धिरेवापेक्षिता, न परोपकारः। योग्यतम एव विजयते जीवनसंघर्षे, न हीनो न वा दुर्बलः। प्रजातन्त्रवादः साम्यवादश्च योग्यता-सिद्धान्तविरुद्धत्वादुपेक्षणीयावेव। लोकोत्तरं जीवनमेव लक्ष्यमस्माकम्, न लोकसाधारणं जीवनम्। दया दौर्बल्यसूचिका। मानसिकी विलासिता परित्यक्तव्या, शक्तिश्च भाग्य-निर्णायिका स्वीकार्या।

निट्शेमहोदयो लोकोत्तरतावादस्य समुपासकः। लोकोत्तरोऽतिमानवः ( सुपरमैन ) तस्मै रोचते। अतिमानवस्य जीवनायैवासौ स्पृहयते। यावल्लोकेऽस्मिन् शक्तिर्न समुपास्यते, बलं नाभिशस्यते, अधिकारो नाधिक्रियते, तावन्न लोको मङ्गलमधिगच्छति, न मानवो मानवतामभ्युपैति। दया विदलयितव्या, उदारता उत्सादयितव्या, सहानुभूतिश्च संहर्तव्या। उत्साहो योग्यता शक्तिश्च संवर्धनीया। बलवन्तः शक्तिमन्तो बलवन्तश्च लोकोत्तरा अति-मानवा एव समाजेऽभ्यर्थनीया लोककल्याणसम्पादकाश्च भवन्ति। उत्साहो बुद्धिरहङ्कारः शक्तिश्चातिमानवस्य गुणाः। शक्तिरुत्साहो विजिगीषा चातिमानवस्य प्रधानं लक्षणम्। अतिमानवानां लोकोत्तराणां विकास एव लोकस्य कल्याणावहो न तु लोकसामान्यस्य। प्रजातन्त्राभिमतस्य समानस्य जनसमूहस्य समुद्भवोऽलं लोकमङ्गलाय।

निट्शेमहोदयेन पूर्वमतिमानवस्य व्यक्तिविशेषस्य, तदनन्तरं च तज्जातीयानां लोकोत्तराणामतिमानवानां समुदायस्यातिमानवानां जातेश्चापि कल्पना विहिता। तन्मते लोकोत्तराणामतिमानवानां जन्मनैव भूमेः साफल्यं सार्थक्यं च भवति। प्रजातन्त्रवादः साम्यसिद्धान्तश्च लोकोत्तराणां महतामतिमानवानामाविर्भावमनुत्साहयति, दयाधर्मः खिष्टीयधर्मश्च दासनीतिमवलम्बेते इति मानवजातेः शत्रुभूतावुभावपि। एवं निट्शेमहोद-यस्य सिद्धान्ते डार्विन-विस्मार्कयोः प्रचुरः प्रभावः प्रतीयते। अधिनायकवादश्च अस्यैवाति-मानववादस्य नवावतारः। निट्शेमहोदयो जर्मनदेशीय आसीत्। तद्देशीया मानवजाति-रेव लोकोत्तराणामतिमानवानां जातिरितीयं धारणा तेन स्वदेशे प्रसारिता। सैव शर्मण्य-देशेऽधिनायकवादं प्रावर्तयत्, द्वाभ्यां विश्वयुद्धाभ्यां च तद्देशीयान् प्रैरयत्, प्रोत्साहनं च प्रादात्। अयमेवास्य सिद्धान्तस्य प्रमुखो दोषः॥



# चतुर्दशः परिच्छेदः

## व्यष्टि समष्टिश्च

### व्यक्तिवादः ( इण्डिविजुअलिज्म )

व्यष्टिसमष्टयोः सम्बन्धविषये विविधाः समुपलभ्यन्ते विप्रतिपत्तयः। हॉब्स-रूसो-प्रभृतीनां केषाञ्चिद् विदुषां मते स्वतन्त्राणां पृथक्पृथगवस्थितानां च व्यक्तीनां यान्त्रिकः समूह एव समाजः। व्यक्तयः स्वाधीनाः परस्परनिरपेक्षाः स्वतन्त्रतया जीवनं यापयन्ति स्म। ततश्च परस्परप्रतिश्रवणेन अन्योन्यसमयेन च मिलित्वा ताभिः समाजस्य निर्माणं कृतम्। अयं हि सामाजिकसमयस्य सिद्धान्तः ( सोशल कन्ट्रैक्ट ) पारस्परिक-प्रतिश्रुतिसिद्धान्तश्च निगद्यते। रूसो-हॉब्सप्रभृतिभिर्विद्वद्भिरस्य सिद्धान्तस्य प्रचारो विहितः। किन्तु वस्तुतोऽनैतिहासिकोऽयं सिद्धान्तः। नहीतिवृत्तमस्य सम्पोषकमुपलभ्यते। परिवारो हि समाजस्य प्राथमिकी व्यष्टिः। परिवाराङ्गभूतश्च व्यक्तिर्न परिवारमन्तरा कदाचिदपि स्वतन्त्रतया निवसति स्म। जन्मत एव व्यक्तयः परिवारेऽनुबद्धा भवन्ति; यावज्जीवं कदाचित् पुत्रपौत्रादि-रूपेण, कदाचिच्च पितृपितामहादिरूपेण परिवारसम्बद्धा एवावतिष्ठन्ते स्म। नहि परिवारं विहाय नितान्तं स्वतन्त्रो मानवः कस्मिन्नपि देशे काले वाऽवस्थातुमुत्सहते स्म। मानवो हि परिवारस्याङ्गम्, परिवारश्च समाजस्याङ्गमिति मानवः समाजाङ्गमेव। न तु समाजव्यतिरिक्ता स्वतन्त्रा व्यक्तिः कथमप्यवस्थातुमुत्सहते। तस्मात् स्वतन्त्रव्यक्तिभि-रन्योन्यसमयेन समाजो निरमायीति रिक्तं वचः।

### समूहवादः ( कलैक्टिविज्म )

लेस्ली-स्टीफेनप्रभृतय उत्क्रान्तिवादिनः समाजस्य शरीरौपम्यं प्रतिपादयन्ति। यथाऽन्योन्याश्रितानामङ्गानां समूहः शरीरम्, तथैवान्योन्याश्रितानां व्यक्तीनां समूहोऽय-मस्माकं समाजः। यथा हि न किञ्चिद्देहाङ्गमान्तरनिरपेक्षं स्वातन्त्र्येणावस्थातुं व्यवहर्तुं वा प्रभवति, तथैव समाजाङ्गभूता व्यक्तयोऽपि न व्यक्त्यन्तरनिरपेक्षाः स्वातन्त्र्येणावस्थातुं व्यवहर्तुं वा प्रभवन्ति। समाजव्यतिरिक्ताया व्यक्तेः स्वातन्त्र्येणावस्थितिरपि कल्पयितुमशक्या। अत एव मानवः सामाजिको जीव इति व्यवह्रियते। या हि देहाङ्गानामन्योन्यपुष्टिरभि-वृद्धिश्च भवति, स्वाङ्गानामभिवृद्धया समष्टयात्मकं शरीरमपि परिवर्धते। वैपरीत्ये च रोगादिवशादुदरादीनामङ्गान्तरसहायकत्वासम्भवेऽनुदिनं परिक्षीयते शरीरम्, कालक्रमेण च पञ्चत्वं गच्छति। एवं समाजाङ्गानां व्यक्तीनामप्यन्योन्यसहयोगेनैवाभिवृद्धिः संपुष्टिश्च भवति। व्यक्तीनामभिवृद्धया च समाजोऽप्यभिवर्धते। वैपरीत्ये चेर्ष्याद्वेषादिवशादन्योन्य-सहयोगाभावे परिहीयन्ते व्यक्तयः, तदनुपातेन च समाजोऽप्यधोगतिमवलम्बत इति लेस्ली-स्टीफेनप्रभृतीनामभिप्रायः।

यद्यप्यलङ्कारदृशा समीचीनोऽयं रूपकारोपः, तथापि नालङ्कारमर्यादामतिक्रम्य परमार्थभूमिं नेतव्यः। देहाङ्गानां न समष्टिव्यतिरिक्तं जीवनम्, व्यक्तयस्तु स्वतन्त्रा अपि जीवन्ति। नहि देहाङ्गानां पृथक् चैतन्यम्, केवलमात्मैव तेषामेकं चेतनाकेन्द्रम्, समाजे तु तद्वैपरीत्येन न समष्टिगतं किञ्चिदेकं चेतनाकेन्द्रम्, किन्तु व्यष्टिभूता व्यक्तय एव चेतनाः। किञ्च व्यक्तयोऽनित्याः, समाजस्तु प्रवाहरूपेणानादिर्नित्यश्च। नहि व्यक्तीनां सर्वात्मना समाजे विलयः सम्भवति। तस्माद् लेस्ली-स्टीफेनप्रभृतीनां मतमिदं यावदलङ्कार-मर्यादां नातिक्रामति, तावदेव शोभते। परमार्थभूमिं प्रविष्टमात्रमेव चानुपपन्नं भवति, न च बुद्धिप्रवेशमर्हति।

### व्यक्तिवादः समाजवादश्च ( इण्डिविजुअलिज्म एण्ड सोशलिज्म )

तदेवं समुपस्थिते व्यक्तिवादसमाजवादयोर्विभेदे जानकेवार्डमहोदयेन आदर्श-दृष्ट्या तयोः सम्बन्धः सम्यङ् निरूपितः। व्यक्तिवादिनो व्यक्तेः प्राधान्यं समाजवादिनश्च समाजस्य प्राधान्यं प्रतिपादयन्ति। परमार्थतस्तु व्यक्तिहितसाधके कार्ये व्यक्तिस्वातन्त्र्यं प्राधान्यं च, समष्टिहितसाधके च कार्ये समाजस्य प्राधान्यं समाजतन्त्रत्वं च व्यक्तीनामित्येव मध्यमो मार्गः। अत एव योगशास्त्रे 'शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः' इति व्यक्तिहितसाधका अभ्युन्नतिकराश्चोपाया नियमरूपेण, 'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः' इति समष्टिहितसाधकाश्चोपाया यमशब्देन पृथङ् निर्दिष्टाः। यमानां नियमानां च सर्वेषामपि पालनं मानवमात्रस्य कृते अपरिहार्यमेव। अयमेव व्यक्तिवाद-समाजवादयोः समन्वयस्य मध्यमो मार्गः। जानकेवार्डमहोदयेन धर्मदर्शनस्य भूमिकायां व्यक्तिसमाजयो-रैक्यसूत्रे समायोजनेनैव यथार्थो विचारः सञ्जायत इति समन्वय एवानयोः सम्यङ् निरूपितः ( पृ० २२९-२३० )।

व्यक्तिवाद-समाजवादयोः प्राधान्याप्राधान्यभेदसमाश्रयेणैव लोकव्यवहारे राज्य-व्यवस्थायां च सर्वत्र भेद उपलक्ष्यते। वस्तुतस्तु तयोः सामञ्जस्यव्यतिरिक्तो न कश्चिद-परोऽभ्युपायो लोककल्याणाय प्रभवति। यदि व्यक्तीनां विचारस्वातन्त्र्यं तत्प्रचारस्वातन्त्र्यं चापह्रियते, अनुशासनबलेन वा स्वाभिप्रायाभिव्यक्तिरपि प्रतिषिध्यते, तदा बुद्धिसम्पन्नोऽपि मानवोऽयं यान्त्रिकमानवान्नातिरिच्यते। अभिनवो विचारस्तदनुरूपमनुष्ठानं तत्प्रचारश्च मानवादतिमानवं सृजति, लोककल्याणं च करोति। तस्माद् व्यक्तेः स्वातन्त्र्यं सर्वथैव परिरक्षणीयं परिपालनीयं सम्माननीयं च, न कथञ्चिदवमाननीयम्। एवं व्यक्तिभिरपि सर्वहितकारिणां सामाजिकनियमानां परिपालने सादरैः सावहितैश्च भाव्यम्। समाज एव तासां स्वरूपाभिव्यक्तेरुत्कर्षलाभस्य च क्षेत्रम्। नहि समाजमवज्ञाय व्यक्तीनामुत्कर्षः स्वरूपलाभो वा सम्भवति। तस्माद् व्यक्तिवाद-समाजवादयोः समन्वय एव लोककल्याणाय व्यक्तिलाभाय च प्रभवतीति तयोः समन्वयबुद्धिरेव सर्वात्मना समीचीना॥



# पञ्चदशः परिच्छेदः

## कर्तव्याधिकारौ

### कर्तव्याधिकारौ ( ड्यूटीज एण्ड राइट्स )

मानवो हि सामाजिको जीवः। सामाजिकजीवत्वेन तस्य समाजनिर्धारितं किञ्चित् कर्तव्यजातं केचिदधिकाराश्च समुपलभ्यन्ते। तावेतौ कर्तव्याधिकारौ अन्योन्यापेक्षावन्योन्य-संसृष्टौ च न कथञ्चिदपि वियोजयितुं शक्येते। कर्तव्याधिकारावुभावपि सामाजिकौ धर्मौ, समाजेन निर्धारितौ परिपालनीयौ च। नहि समाजव्यतिरिक्तस्यैकाकिनो जनस्य किञ्चिदपि नैतिकं कर्तव्यम्, नापि कश्चिन्नैतिकोऽधिकारः। कर्तव्यं हि नैतिकबाध्यतारूपं नैतिक-मृणम्। धर्मशास्त्रापरपर्याये भारतीये नीतिशास्त्रे पितृऋणम्, ऋषिऋणम्, देवऋणं चेति त्रिविधमृणं मानवस्य प्रतिपादितम्। त्रिविधेनानेन ऋणेन अधमर्ण एव ऋणवान् जायते, यावज्जीवं च तत्परिशोधनाय प्रयतते। यद्धि तात्कालिकं प्रमुखं लक्ष्यं मानवस्य, तस्य प्रतिक्षणं स्मरणार्थं प्रतीकरूपं किञ्चिच्चिह्नजातं मूर्तरूपं पुरः स्थापयति जनो येन प्रतिक्षणं तस्य कर्तव्यस्य स्मरणं भवति, तत्सम्पादनाय दार्ढ्यं चोपजायते हृदि। द्वितीये विश्वयुद्धे विपद्ग्रस्तैः पराजयोन्मुखैरपि आङ्गलदेशीयैर्विजयमभिलक्ष्य विजयसूचकस्य 'विक्टरी'-शब्दस्याद्यो 'वी'-वर्णः प्रतीकरूपेण पुरः स्थापितः। प्रत्यागारं प्रत्यापणं प्रतिपत्रं चाङ्कितो दृश्यते स्म 'वी'-वर्णः। सर्वैरपि जनैः स्ववस्त्रेष्वप्यङ्कितोऽयं वर्णः। तद्बलेन च मानसिकीं शक्तिमवाप्य विजय एवाधिगतो युद्धावसाने। एवं त्रिभिर्नैतिकैर्ऋणैर्यावद् ऋणवान् भवति मानवस्तावत् त्रिसूत्रात्मकं यज्ञोपवीतं धारयतीति भारतीया पद्धतिः। ऋणत्रयापाकरणार्थमेव च ब्रह्मचर्यगृहस्थवानप्रस्थाख्येषु त्रिष्वाश्रमेषु सर्वमपि कर्तव्यजातं निर्दिष्टम्। एवं ऋणत्रयमपाकृत्य त्रिभिराश्रमैश्चतुर्थे संन्यासाश्रमेऽधमर्णताविनिर्मुक्तः स्वतन्त्रो जायत इति तत्र यज्ञोपवीतमपि न धारयति। एवं सर्वं कर्तव्यजातं नैतिकमृणरूपमेव।

### कर्तव्य-विभागः ( क्लासीफिकेशन आफ ड्यूटीज )

नैतिकर्णात्मकं कर्तव्यमिति पूर्वमुपपादितम्। तच्च कर्तव्यं स्वं प्रति, परं प्रति, ईश्वरं प्रति चेति त्रिधा विभक्तं भवति। अस्मत्साहित्ये कर्तव्यात्मकस्य ऋणस्य त्रैविध्यं यथा प्रतिपादितम्, तथैव नैतिकर्णरूपस्य कर्तव्यस्यापि त्रैविध्यं पाश्चात्त्यनीतिशास्त्रे प्रति-पादितमस्ति। तद्यथा—

( १ ) स्वमात्मानं प्रति यन्नैतिकं कर्तव्यं ( ड्यूटीज टु सेल्फ ) मानवस्य विद्यते, तत्रापि १. भौतिकं कर्तव्यम्, २. आर्थिकं कर्तव्यम्, ३. बौद्धिकं कर्तव्यम्, ४. सौन्दर्य-विषयकं कर्तव्यम्, ५. धार्मिकं कर्तव्यं चेति पञ्च विभागाः प्रतिपादिताः। आत्मशब्देनात्र

शरीरं मनश्चेति द्वे रक्ष्येते। तथा च शारीरं मानसं च कर्तव्यं भौतिककर्तव्यम्। आत्मरक्षणं स्वास्थ्यचिन्ता विनोदश्चेति त्रयं मुख्यं भौतिकं कर्तव्यम्। तच्च शारीरिकं कर्तव्यमित्यप्युच्यते। 'शरीरमाद्यं खलु धर्मसाधनम्' इत्यभियुक्तोक्तेरात्मा सर्वथा रक्षणीय एव। अत एवात्मघाते नाधिकृतो मानवः। आत्मघातो नैतिकापराध एव। "असूर्या नाम ते लोका अन्धेन तमसावृताः। तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः॥" (यजुः, ४०) इत्यादिना श्रुतौ विनिन्दितश्चात्मघातः। मानवस्य सामाजिकजीवत्वेन न केवलं तदीय एवाधिकारस्तज्जीवने। यावत्तदङ्गिनः परिवारादिरूपस्य समाजस्याप्यधिकारस्तज्जीवने। तस्मात्तदनुमतिमन्तरा न कश्चिदपि स्वजीवनस्य विनाशायात्मघाताय वाऽधिकृतः। किञ्च, ऋणत्रयमनपाकृत्य ऋणवतो जनस्य क इवाधिकार आत्मघाते स्यात्? तस्मात् स्वात्मा सर्वथा रक्षणीयः, स्वजीवनस्य परिवर्धनाय च प्रयतितव्यम्, "सर्वेषामेव धर्माणामारोग्यं मूलमुत्तमम्" इत्यभियुक्तोक्तेः स्वास्थ्यमारोग्यं च सर्वात्मना सम्पादनीयम्। शरीरमारोग्यं च नैतिककर्तव्यपालनाय अत्यन्तमावश्यकमपरिहार्यं च।

समाजे निवसतो जनस्य धनार्जनमप्यात्मानं प्रति समुचितमावश्यकं च कर्तव्यम्। 'धनाद् धर्मस्ततः सुखम्' इति धनमपि धर्मस्य साधनम्। नहि धनमन्तरा लोकयात्रा सम्भवति, नापि नैतिककर्तव्यपालनाय धर्मानुष्ठानाय वा प्रभवति जनः। अत एव 'यस्यास्ति वित्तं स नरः कुलीनः', 'सर्वे गुणाः काञ्चनमाश्रयन्ते', 'न वन्धुमध्ये धनहीनजीवनम्' इत्येवमाद्या धनस्य प्रशंसाऽपि दृश्यते। नैतिकैः साधनैरेव तद् धनमुपार्जनीयम्, उचितरूपेणैव च तस्य व्ययो विधेय इति मानवस्यार्थिकं कर्तव्यम्। धनस्यात्यन्तोपयोगित्वे धर्मसाधनत्वेऽपि तस्य यथार्थं मूल्यं साधनरूपमेव विद्यते, न साध्यरूपमिति सम्यगवधेयम्। ये तु धनस्य साधनरूपतां विस्मृत्य तस्य साध्यरूपतां भ्रमवशादभ्युपगच्छन्ति, न ते न्यायेन सञ्चरन्ते। नैतिककर्तव्यात् परिभ्रष्टास्ते नितान्तं स्वार्थपरायणा भवन्ति, अनर्थं च प्राप्नुवन्ति। एवं धनस्य साधनरूपतामभ्युपगच्छता नैतिकोपायैर्धनस्योपार्जनं सदुपयोगश्च कर्तव्य इति जनस्यार्थिकं कर्तव्यम्।

धनोपार्जनवद् ज्ञानोपार्जनमपि लोकस्यापरिहार्यं कर्तव्यम्। नहि मूर्खा ज्ञानविरहिताश्च जनाः परमार्थतो नैतिकं स्वकर्तव्यं परिपालयितुं प्रभवन्ति, न वा ज्ञानविरहितैर्जनैः समाजस्य कश्चन यथार्थ उपकारः सञ्जायत इति ज्ञानसम्पादनमपि जनस्यापरिहार्यं कर्तव्यम्। तच्च बुद्धिसम्बन्धाद् बौद्धिकं कर्तव्यमिति व्यपदिश्यते। बुद्धेर्विकास एव व्यक्तिविकासस्य समाजविकासस्य च मूलम्। ज्ञानमन्तरा नात्मोन्नतिः, न वा समाजोन्नतिः सम्भवति। अत एव 'ऋते ज्ञानान्न मुक्तिः', 'विद्ययाऽमृतमश्नुते', 'न कर्मणा न प्रजया धनेन ज्ञानेनैके अमृतत्वमानशुः' इत्येवमादिना रूपेण श्रुत्यादौ बहुधा ज्ञानस्य प्रशंसोपलभ्यते। तस्माद् ज्ञानोपार्जने सावहितैः सप्रयत्नैश्च सर्वैरपि भाव्यम्। येन तु—

'प्रथमे नार्जिता विद्या द्वितीये नार्जितं धनम्।
तृतीये नार्जितं ज्ञानं चतुर्थे किं करिष्यति॥'

इत्यभियुक्तोक्तेर्ब्रह्मचर्यगृहस्थवानप्रस्थाश्रमेषु यथाक्रमं विद्याधनात्मज्ञानानां सम्यगुपार्जनं

न विहितम्, तस्य तुरीयाश्रमोऽपि निष्फल एव। व्यर्थमेव तस्य जीवनम्। नहि ज्ञानविहीनस्य जनस्य नैतिकं मूल्यं किञ्चिदपि भवति, न चास्य जीवनसाफल्यं कथञ्चिदपि भवितुमर्हतीति ज्ञानसम्पादनं जनस्यापरिहार्यं नैतिकं कर्तव्यम्। तच्च बुद्धिप्रभवत्वाद् बौद्धिकं मानवस्य कर्तव्यमिति व्यवह्रियते।

सौन्दर्यविषयकमपि कर्तव्यजातं मानवस्य। सर्वकार्येषु शुचितायाः सौन्दर्यस्य च सृजनं परिरक्षणं संवर्धनं च जीवनस्य शुचितां सौन्दर्यं चाभिव्यनक्ति। सौन्दर्याभिरुचिरपि नैतिक-विकासस्य मूलम्। सौन्दर्याभिरुचिर्मनुप्रोक्तेषु धर्मलक्षणेषु शौचपदेन परिगृहीता। यथा—

धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः।
धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम्॥

सैव च योगशास्त्रे वैयक्तिककर्तव्यरूपेषु नियमेष्वभ्यर्हितत्वात् शौचपदेन प्रथममुपात्ता परिदृश्यते—"शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः" इति। न केवलं मृज्जलादिजनितो बाह्यशौच एवात्र शौचपदेन गृह्यते, किन्तु मनःशुचिता, व्यवहारशुचिता, आचारशुचिताऽपि चात्र शौचपदेन परिगृह्यन्ते। यथा हि मृज्जलादिजनितो बाह्यशौचो वस्तुनः सौन्दर्याय कल्पते, एवं मानसिकी शुचिता व्यवहारशुचिता च जीवनस्य सौन्दर्यमादधाति। शौचप्रियस्य जीवनमपि शुचित्वात् सौन्दर्यमयं भवतीति सौन्दर्याभिरुचिरपि मनुष्यस्य जीवनोत्कर्षाधायिका। तस्मात् सौन्दर्यविषयकमपि मानवस्य कर्तव्यम्।

आत्मसंयमरूपं पञ्चमं कर्तव्यं नैतिककर्तव्यमिति व्यवह्रियते। बुद्धिपरतावादिनां नये बुद्धिपूर्वकमिन्द्रियाणां दमनमेव पुरुषस्य निःश्रेयसाय कल्पते। स एवात्मसंयमो मनुप्रोक्तेषु धर्मलक्षणेषु दम इति पदेन योगशास्त्रनिर्दिष्टेषु वैयक्तिककर्तव्यरूपेषु नियमेषु च तप इति पदेन परिगृहीतो दृश्यते। संयमिनां जीवनमेव नैतिकं समुत्कर्षं प्रपद्यते, नासंयमिनामिन्द्रियपराणाम्। आत्मसंयम एव पुरुषाणां प्रातिस्विकीमुन्नतिमादधाति, समाजस्य शान्तिं सुखं चोपजनयति। एवं पञ्चविधं पुरुषस्यात्मानं प्रति कर्तव्यजातं परिगणितं नीतिशास्त्रे।

परान् प्रति मानवस्य यत्कर्तव्यजातं तदेव सामाजिकं कर्तव्यमिति व्यवह्रियते। तादृशेषु कर्तव्येषु जीवनं प्रत्यादरभावः प्रधानं प्रथमं च कर्तव्यम्। अत एव सामाजिककर्तव्यरूपेषु योगशास्त्रप्रोक्तेषु यमेषु प्रथममुपात्ताऽहिंसा। जीवनस्य समादर-बुद्धिरेव अहिंसा। आत्मनो जीवनस्य परिरक्षणे यथा यत्नवान् भवति जनस्तथा परेषां जीवनस्य परिरक्षणे संवर्धने च तेन यत्नवता भाव्यम्। आत्मजीवनवत् परजीवनस्यापि समादरः कर्तव्य इत्ययमेवाहिंसाया अभिप्रायः। स च समादरः, सा वा अहिंसा, न केवलं मानवजीवनमात्रसम्बद्धा, किन्तु तिरश्चामपि जीवनमभिव्याप्नोति। ततश्च योगशास्त्रे "जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम्" इति यावज्जीवव्यापिनीयमहिंसा उपादेयेति प्रतिपादितम्। अत एव च 'मा हिंस्यात् सर्वा भूतानि' इति प्रथमो वैदिकादेशोऽपि सर्वभूतविषयिणीमेवाहिंसां प्रतिपादयति। अत एवं जीवमात्रस्य जीवनं समादरणीयमात्मजीवनवत् परिरक्षणीयं चेति प्रथमं मानवस्य परान् प्रति कर्तव्यम्।

जीवनसम्मानवत् स्वातन्त्र्यसम्मानमपि ( रेस्पैक्ट फॉर फ्रीडम ) द्वितीयं सामाजिकं कर्तव्यं परान् प्रति । काण्टमहोदयस्य द्वितीयं सूत्रं स्वातन्त्र्यसम्मानमस्यैवाभिव्यञ्जकम् । 'तथैव व्यवहर्तव्यं सर्वैर्यथा मानवता सर्वदा साध्यरूपैवावतिष्ठेत, न तु साधनरूपतां यायात् इति काण्टमहोदयस्य द्वितीयं सूत्रम् । साधनरूपत्वाभ्युपगमे मानवस्य स्वातन्त्र्यं नावतिष्ठते, स्वातन्त्र्ये वा साधनरूपता नोपपद्यत इति मानवतायाः साध्यरूपतामात्रं प्रतिजानता काण्टमहोदयेन स्वातन्त्र्यं प्रति समादरबुद्धिरेव प्रदर्शिता । तथा च स्वातन्त्र्यस्य सम्माननं द्वितीयं सामाजिकं कर्तव्यं पुरुषान्तरं प्रति ।

चरित्रस्य सम्माननमपि तृतीयं कर्तव्यं काण्टमहोदयस्य तेनैव सूत्रेण सूच्यते । यथा जीवनस्य समादरः ( रेस्पैक्ट फॉर लाइफ ), स्वातन्त्र्यस्य च समादरः ( रेस्पैक्ट फार फ्रीडम ) परेषामनुष्ठेयस्तथैव तेषां चरित्रस्यापि समादरः ( रेस्पैक्ट फार करेक्टर ) अवश्यं विधेयः । हेगलमहोदयेनापि 'व्यक्तित्वं प्रपद्यस्व, व्यक्तिवच्च व्यवह्रियतां सर्वैः' इति प्रतिजानता चरित्रसमादर एव व्यक्तिसमादरेण प्रदर्शितः ।

सम्पत्तिसमादरः ( रेस्पैक्ट फॉर प्रापर्टी ) अपि तुरीय आदेशः । 'मा गृधः कस्यस्विद् धनम्' ( यजुः, ४० ) अयमेव वैदिक आदेशोऽत्र सम्पत्तिसमादरपदेन, योगशास्त्रे प्रोक्तेषु समाजिककर्तव्यरूपेषु यमेषु चास्तेयपदेनाभिप्रेतः । परेषां सम्पत्तेरपहरणं न विधेयमित्यत्र सम्पत्तिपदं न केवलं स्वर्णादिसम्पत्तिपरं धनधान्यादिसम्पत्तिपरं वा, किन्तु पुरुषस्य ख्यातिः, समयादयोऽपि चात्र सम्पत्तिपदेनाभिप्रेताः । अन्यैरपि 'यशोधनानां हि यशो गरीयः', 'तस्माद् यशो यत् परमं धनं वः' इत्येवमादिभिः पद्यांशैर्यशांसि धनरूपेणाभ्युपगतानि । तस्मात् परेषां सम्पत्त्यपहरणप्रयत्नवत् ख्यात्यपहरणप्रयत्नोऽप्यनैतिकः परित्याज्यश्च भवति ।

सामाजिकव्यवस्थायाः समादरोऽपि ( रेस्पैक्ट फॉर सोशल आर्डर ) सामाजिककर्तव्येष्ववश्यानुष्ठेयत्वेन विहितो दृश्यते । सामाजिकी व्यवस्था लोकयात्रानिर्वाहायापरिहार्या । नहि समाजव्यवस्थामन्तरा पुरुषस्य प्रातिस्विको नैतिकोऽभ्युदयः सम्भवति, न वा सामाजिकं सुखं शान्तिर्वा व्यवतिष्ठते । अत एव सामाजिकी व्यवस्था सर्वथैव परिरक्षणीया समादरणीया च । सामाजिकव्यवस्थायां वर्णाश्रमव्यवस्था, कुटुम्बव्यवस्था, विवाहपद्धतिः, शिक्षणपद्धतिः, धर्मव्यवस्था, राज्यव्यवस्था चेति समाजहितसाधिकाः सर्वा अपि व्यवस्था अन्तर्हिता भवन्ति । तासां परिपालनं परिरक्षणं च लोककल्याणाय अपरिहार्यम् । तच्च तत्र समादरबुद्धिसाध्यमेव भवतीति सामाजिकव्यवस्थानां समादरोऽपि सर्वैरवश्यमेव विधेयः ।

सत्यस्य समादरः ( रेस्पैक्ट फॉर ट्रुथ ) कर्तव्य इत्यपर आदेशः । "नहि सत्यात् परो धर्मो नानृतात् पातकं परम्", "सत्यमेव जयते नानृतम्" इत्येवमादिभिः शास्त्रवचनैः सत्यस्य माहात्म्यं बहुशः प्रतिपादितम् । नहि सत्यमन्तरा लोकयात्रा क्षणमप्यवस्थातुं प्रभवति । न केवलं मानवव्यवहारा एव, किन्तु देवमनुष्यतिरश्चां सर्वेषामपि लोकव्यवहाराः सत्यबलेनैव प्रतिष्ठिताः । अत एव 'ऋष्यार्यम्लेच्छानां समानं लक्षणम्' इति

वदता वात्स्यायनेनापि यावज्जीवव्यापिसत्यस्य स्वरूपं प्रदर्शितम् । तस्मात् सत्यस्य समादरोऽवश्यं कर्तव्यः ।

प्रगतिसमादरो ( रेस्पैक्ट फॉर प्रोग्रेस ) विधेय इत्यपर आदेशः । मानवजातेरनुदिनं प्रगतिर्भवति भविष्यति चेति दृढं विश्वसनीयम्, तदर्थं च प्रतिक्षणं प्रयतनीयमित्येवास्य आदेशस्याभिप्रायः । समाजस्य तद्द्वारा च विश्वस्याभ्युदयेऽस्माकमपि यथेष्टो भागो भवेदिति बुद्ध्या स्वकीये विशिष्टे कार्यक्षेत्रे सर्वात्मना सम्पूर्णेन हृदयेन सम्पूर्णेन मनसा समस्तेन बलेन च परिश्रमो विधेय इति मेकेंजीमहोदयः प्रतिपादयति । मानवप्रगतौ दृढो विश्वासः सर्वात्मना प्रयत्नश्च जनस्येश्वरविश्वासमीश्वरभक्तिं चाभिव्यञ्जयतः ।

सर्वमिदं जनस्य परं प्रत्यनुष्ठेयं सामाजिकं कर्तव्यजातमस्ति । अस्मिन् कर्तव्यवर्गे पारिवारिकं कर्तव्यम्, सामाजिकं कर्तव्यम्, स्वदेशं प्रति मनुष्यत्वं प्रति पश्वादीन् प्रति स्थावरान् वृक्षादीन् प्रति च मनुष्यस्य यत्कर्तव्यजातं तत्सर्वमन्तर्भूतं भवति । परिवारिकं कर्तव्यजातम्—

मा भ्राता भ्रातरं द्विक्षन् मा स्वसारमुत स्वसा ।
सम्यं च सव्रता भूत्वा वाचं वदत भद्रया ॥ ( अथर्व ३।३०।३ )
अनुव्रतः पितुः पुत्रः मात्रा भवतु सम्मनाः ।
जायापत्ये मधुमतीं वाचं वदतु शान्ति वाम् ॥ ( अथर्व ३।३०।२ )

इत्येवमादिषु वेदमन्त्रेषु सम्यङ् निरूपितम् । तदेव च रामायणे रामलक्ष्मणादीनां चरित्रे प्रतिफलितमवलोक्यते । तत्परिपालेनैव परिवारस्य सुखं शान्तिश्चानुभूयते, नान्यथा ।

पुरुषान्तरं प्रति विधीयमानं सामाजिकं कर्तव्यजातमपि तत्रैवाथर्ववेदे—

समानी प्रपा सह वोऽन्नभागः समाने योक्त्रे सह वो युनज्मि ।
सम्यञ्चोऽग्निं सपर्यतारा नाभिमिवाभितः ॥ ( ३।३०।६ )
सहृदयं सामनस्यमविद्वेषं कृणोमि वः ।
अन्योन्यमभि हर्यत वत्सं जातमिवाघ्न्या ॥ ( ३।३०।१ )

इत्येवमादिषु वेदमन्त्रेषु सम्यक् प्रतिपादितम् । तादृशमेव सामाजिकं कर्तव्यजातमाधुनिकैरपि नीतिशास्त्रज्ञैर्निर्दिष्टं दृश्यते । तत्र सत्यम्, साम्यम्, परोपकारश्चेति त्रितयं विशेषतो निर्दिष्टम् । योगशास्त्रे च सामाजिककर्तव्यरूपेषु यमेषु 'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः' इति कर्तव्यपञ्चकं प्रतिपादितम् ।

ईश्वरं प्रति मनुष्यस्य कर्तव्ये सुदृढ ईश्वरविश्वासः, ईश्वरभक्तिः, प्रत्यहं नियमतस्तस्योपासना, ध्यानं चेति सर्वं समायाति । अनुक्षणं तद्गतेन चेतसा सर्वमपि लौकिकं कार्यजातमीश्वरार्पणबुद्ध्यैव कर्तव्यमित्यस्माकमीश्वरं प्रति कर्तव्यम् । तच्च यजुर्वेदे—

ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यस्विद् धनम् ॥ ( ४०।१ )
कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ ( ४०।२ )

इत्येवमादिषु वेदमन्त्रेषु स्फुटं निर्दिश्यते । तदनुसारं सर्वत्रेशावास्यं जगत् पश्यतो

जनस्य न कथञ्चिदपि कस्मिंश्चित् पापकर्मणि प्रवृत्तिः सम्भवति। परैरिदं मत्कर्म नावलोक्यते, न वा ज्ञायत इति बुद्ध्यैव पापे कर्मणि प्रवर्तितुमुत्सहते जनः। यदा तु सर्वमपीदं जगदीशावास्यमिति समुदेति साक्षात्कारात्मकमपरोक्षं ज्ञानम्, तदा सर्वमपि मे कार्यजातमीश्वरः प्रतिक्षणं पश्यति, नहीश्वरात् संगोप्य किञ्चिदपि कार्यं कर्तुं शक्यमिति पापाद् विनिवर्तते जनः। एवं 'तेन त्यक्तेन भुञ्जीथाः' इत्यनुध्यातः परद्रव्यापहरणादावप्रवृत्तिः। एवमीश्वरं प्रति यन्मनुष्यस्य कर्तव्यं तत्सम्यक् परिपालयतो जनस्य सर्वमपि सामाजिकं वैयक्तिकं च कर्तव्यजातं स्वत एव सम्यक् परिपालितं भवति। निखिलस्यापि नीतिशास्त्रस्याधारभूत ईश्वरविश्वासः। सुदृढे च तस्मिन्नेकेनैव प्रयत्नेन उत्पतन्ती मधुकरराज्ञी मधुमक्षिका इवानुसरन्ति कर्तव्यान्तराणि।

## पूर्णबाध्यतात्मकमपूर्णबाध्यतात्मकं कर्तव्यम्

काण्टमहोदयेन पूर्णबाध्यतात्मकम्, अपूर्णबाध्यतात्मकं चेति (ड्यूटीज ऑफ परफैक्ट आब्लीगेशन एण्ड ड्यूटीज ऑफ इम्परफैक्ट आब्लीगेशन) मानवीयं कर्तव्यजातं द्विधा विभक्तम्। तत्र पूर्णबाध्यतात्मकं कर्तव्यं सुनिश्चितमभ्रान्तं च भवति। यथा अहिंसा सत्यमस्तेयं च पूर्णबाध्यतात्मकं मानवस्य कर्तव्यम्। सर्वैरपि जनैस्तेषां परिपालनं कर्तव्यमेव। नहि तत्पुरुषस्येच्छाधीनम्, किन्तु प्रभुशब्दवदवश्यमनुष्ठेयम्। तदननुष्ठाने उल्लङ्घने वाऽधर्मो भवति; नैतिकादर्शाच्च परिभ्रश्यते जनः। परोपकारदानादिरूपं च कर्तव्यमपूर्णबाध्यतात्मकम्। नहि तेषामनुष्ठाने बाध्यो जनः। पुरुषस्येच्छातन्त्रमेव तदनुष्ठानम्। देशकालपरिस्थित्यपेक्षया तदनुष्ठातुमननुष्ठातुं च स्वाधीनो जनः।

एवं काण्टमहोदयेन पूर्णबाध्यतात्मकमपूर्णबाध्यतात्मकमिति द्विधा विभक्तं कर्तव्यजातम्, तथापि तस्यायं विभागो न तावन्नैतिकः, किन्तु वैधानिक एव। परिस्थितिविशेषे पुरुषस्य कर्तव्यं निश्चितमेव भवति। नहि पुरुषस्येच्छाधीनमिति नैतिकदृष्ट्या सर्वमपि कर्तव्यं पूर्णबाध्यतात्मकमेव। तथापि न बलप्रयोगस्य तत्रावसरः। बलप्रयोगमन्तरैव कर्तव्यबुद्ध्या नैतिकं कर्तव्यं निश्चितरूपेणैव परिपालनीयम्। तस्मात् काण्टमहोदयस्यायं विभागो न नैतिकः, किन्तु प्रधानतया वैधानिक एव प्रतीयते।

## ब्रेडलेमहोदयस्य मतम्

सर्वोऽपि जनः कस्मिंश्चिद् विशिष्टे देशे काले च विशिष्टायां परिस्थितौ विशिष्टगुणस्वभावशक्तिसम्पन्न एव जायते। तद्देशकालपरिस्थित्याद्यनुरूपं तद्गुणस्वभावशक्त्याद्यनुकूलं च तस्य कर्तव्यमपि सुनिर्धारितं परिनिश्चितं च। आत्मकल्याणाय लोककल्याणाय च स्वस्थानानुरूपस्य स्वकर्तव्यस्य परिपालनमवश्यमनुष्ठेयं भवति। अयमेव सिद्धान्तो ब्रेडलेमहोदयस्य शब्देषु 'माई स्टेशन एण्ड इट्स ड्यूटीज' इति कथ्यते। कार्लाइलमहोदयेनापि 'निकटस्थं कर्तव्यं परिपालयत, स्वानुरूपं कर्तव्यमवधारयत, हरक्यूलीसवच्च पतत्परिपालनाय उद्युक्ता भवत' इति प्रतिपादयता निकटस्थ कर्तव्यपदेन स्थानानुरूपं कर्तव्यमेव सूचितम्। तदेवं मनुष्यस्य कर्तव्यं तस्य सामाजिकस्थानेनावधारितं भवति।

सामाजिकस्थानभेदादेव गुरुशिष्ययोः, शास्यशासकयोः, न्यायाधीशप्राड्विवाकयोश्च स कर्तव्यभेदो भवति।

तदेवं व्यक्तेः त्रिविधं कर्तव्यं सञ्जायते—प्रथमं सामान्यं कर्तव्यं पूर्वोक्तं जीवनस्वातन्त्र्यसम्पत्त्यादिसमादररूपं भवति। तत्सामान्यं कर्तव्यं सर्वेषामपि समानमेव। सामाजिकस्थानभेदाद् व्यक्तीनां विशिष्टं कर्तव्यं द्वितीयम्। तृतीयं चाकस्मिके स्थितिपरिवर्तने जायमानं तात्कालिकं कर्तव्यम्। यथा कश्चिज्जनसेवकः प्रजातन्त्रव्यवस्थायां प्रतिपक्षनेता प्रधानमन्त्रिपदं प्राप्नोति, तदा तत्समकालमेवास्य कर्तव्यपरिवर्तनमपि सञ्जायते। शासनस्य दोषप्रदर्शनं समालोचनं च प्रतिपक्षनेतुः प्रधानं कर्तव्यम्, शासनस्य संशोधनं समर्थनं च प्रधानमन्त्रिणः कर्तव्यमिति प्रतिपक्षनेतृकर्तव्यात् प्रधानमन्त्रिणः कर्तव्यं भिद्यते। इदमपि वस्तुतः स्थानानुरूपमेव कर्तव्यम्, न तु ततो भिद्यते।

## कर्तव्यविरोधः कर्तव्याकर्तव्यविवेकश्च

महाभारतयुद्धस्य प्रारम्भे यथाऽर्जुनः भीष्मादीन् सम्बन्धिनः सम्मुखस्थानवलोक्य—

येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च।
आचार्याः पितरः पुत्रास्तथैव च पितामहाः।
मातुलाः श्वशुराः पौत्राः श्यालाः सम्बन्धिनस्तथा॥
एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन।
अपि त्रैलोक्यराज्यस्य हेतोः किन्नु महीकृते॥....
सीदन्ति मम गात्राणि मुखं च परिशुष्यति।
वेपथुश्च शरीरे मे रोमहर्षश्च जायते॥
गाण्डीवं स्रंसते हस्तात् त्वक् चैव परिदह्यते।
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः॥

इत्येवमुक्त्वा अर्जुनः किंकर्तव्यविमूढः सञ्जातः। एवं प्रायः सर्वेषामपि जीवने कदाचित् तादृशोऽवसरः समुपस्थितो भवति, यस्मिन् कर्तव्ययोर्विरोधात् सन्देहदोलायां दोलायमानं पुरुषस्य हृदयं न कर्तव्याकर्तव्यमवधारयितुं प्रभवति। उदाहरणार्थं चिकित्सकानां जीवने जीवनसम्मानस्य सत्यसम्मानस्य च विरोधः समुपस्थितो भवति। कस्मैचिदसाध्यरोगग्रस्ताय तदनुयुक्तश्चिकित्सको यदि सत्यं वदति वास्तविकीं च तस्य स्थितिं सूचयति, तदा विप्रकृष्टोऽपि तस्य मृत्युरासन्नतरो भवतीति ध्रुवम्। ततश्च जीवनावसानहेतुत्वात् तद्वचनस्य जीवनसमादरविरोधो भवति। यदि तु तद्रक्षणार्थं वस्तुस्थितिं संगोप्य अन्यथा वदति, तदा सत्यसमादररूपस्य कर्तव्यस्य विरोधो भवति। एवं जीवनसम्मानस्य सम्पत्तिसम्मानस्य च विरोधः सम्भवति। कश्चिदात्मघातोद्यतोऽसिधेनुकयाऽऽत्मव्यापादनसमर्थो न भवेदिति बुद्ध्या तस्यासिधेनुकापहरणं सम्पत्तिसमादरप्रतिकूलमपि जीवनसमादरानुकूलं भवतीति जीवनसम्पत्त्योः समादरेऽहिंसास्तेययोर्वा विरोधो भवति।

एवंविधेषु कर्तव्यव्यामोहावसरेषु कर्तव्याकर्तव्यावधारणार्थं नीतिशास्त्राङ्गभूतं कर्तव्याकर्तव्यशास्त्रं ( काज्यूस्ट्री ) पृथगेव केचिदामनन्ति । तच्च विशिष्टास्ववस्थासु नैतिकनियमानामपवादभूतान् नियमानवधारयति । परे तु व्यवहारस्य नियमावधारणमप्यनुचितं मन्वानास्तदुल्लङ्घननियमानां निर्माणं ततोऽप्यनुचितं मन्वते । तेषां मते कर्तव्याकर्तव्ययोर्वस्तुतो न कश्चिदपि विरोधो यस्य परिहाराय कर्तव्याकर्तव्यशास्त्रं पृथगपेक्ष्येत । विशिष्टायां परिस्थितौ विशिष्टमेव कर्तव्यम्, तच्च देशकालाद्यपेक्षयाऽवधारितमेव भवति, न त्ववधारणीयम् । 'न मानयोर्विरोधोऽस्ति' इत्युदयनीयं वचनमप्यत्रानुसन्धेयम् । ब्रैडलेमहोदयस्य स्वानुरूपकर्तव्यतासिद्धान्तेनैव कर्तव्याकर्तव्यनिर्णयो भवति, न तु तदर्थं नीतिशास्त्रव्यतिरिक्तं कर्तव्याकर्तव्यशास्त्रमपेक्षितम् ।

## अधिकारः

कर्तव्यसहभूतोऽधिकारः कर्तव्यसापेक्षश्च । यदा समाजनिर्धारितं किञ्चित् कर्तव्यं भवति जनस्य, तदा तत्परिपालनाय केचिदधिकारा अपि समाजनिर्धारिता भवन्ति । अधिकारा एव कर्तव्यपालनानुरूपां स्थितिं जनयन्ति । समाज एवाधिकाराणामवधारणे प्रमाणम् । ते चाधिकाराः कर्तव्यानुरूपा एव । यथा हि जीवनसमादरः, स्वतन्त्रतासमादरः, सम्पत्तिसमादरश्च मनुष्यस्य कर्तव्येषु परिगणितास्तथैव तदनुरूपो जीवनाधिकारः, स्वातन्त्र्याधिकारः, सम्पत्त्यधिकारश्च मानवस्याधिकारेषु परिगण्यन्ते ।

जीवनाधिकारो ( राइट टु लिव ) मनुष्यस्य प्रथमोऽधिकारः । स च मौलिकोऽधिकार इत्युच्यते । समाजस्य नैतिकविकासानुक्रमेण अधिकारस्यास्याभ्युपगमो परिवर्धते परिक्षीयते वा । कस्मिंश्चित् समये कन्यानां जन्मकाल एव तासां वधः क्रियते स्म । केषुचित् सम्प्रदायेषु धर्मान्तरानुयायिनां वधो निःश्रेयसकरो भवतीति प्रतिपाद्यते । अद्यापि युद्धे मानवानां वधो न दोषाय भवति । एतत् सर्वं जीवनमूल्यस्य जीवनाधिकारस्य च नैतिकविकासानुगामितामवगमयति ।

जीवनाधिकारे जीविकाधिकारोऽप्यन्तर्भूतो भवति । यदि कश्चिन्मनुष्यो जीविकां नोपलभते, तदा जीविकाभावादसौ जीवनमपि न धारयितुं प्रभवतीति जीवनाधिकारे जीविकाधिकारोऽपि सन्निहितो भवति । स्वजीवनाधिकारवज्जीविकाधिकारवच्च परेषामपि जीवने जीविकायां चाधिकारोऽस्तीति पर्यालोच्य तेषामपि जीवनस्य जीविकायाश्च समादरो विधेयः ।

## स्वातन्त्र्याधिकारः ( राइट आफ फ्रीडम )

स्वातन्त्र्यस्याधिकारोऽपि मानवस्यापरो नैतिकोऽधिकारः । कर्मफलभोक्तृत्वोपपादनाय आत्मसाक्षात्कारात्मसर्वोत्तममङ्गलमयस्य निःश्रेयसस्य लाभाय च स्वातन्त्र्यं पुरुषस्यावश्यमभ्युपेयम् । नहि परायत्तैः पुरुषैः क्रियमाणं कर्म नैतिकनिर्णयस्य विषयतामापद्येत । स्वतन्त्रेच्छया क्रियमाणमेव कर्म नैतिकनिर्णयमर्हतीति कर्मस्वातन्त्र्यमिच्छास्वातन्त्र्यमवश्यमभ्युपेयम् । तथापि सामाजिकव्यवस्थापेक्षया नियन्त्रितमेव भवति तत्स्वातन्त्र्यम्, अन्यथाऽराजकत्वापत्तिः प्रसज्येत । स्वातन्त्र्याधिकारसहभूतं सामाजिकव्यवस्थासम्मानात्मकं कर्तव्यं भवति ।

## सम्पत्त्यधिकारः ( राइट ऑफ प्रापर्टी )

स्वातन्त्र्याधिकारस्यैव परिणामभूतः सम्पत्त्यधिकारः। कर्मस्वातन्त्र्ये इच्छास्वातन्त्र्ये चात्मविकासायात्मसाक्षात्काराय चोपयोगिनां साधनानां स्वोपार्जितानामुपयोगस्वातन्त्र्यमप्यन्तर्भवति। साधनोपयोगस्वातन्त्र्यमेव सम्पत्त्यधिकारस्य मूलम्। सम्मिलितायाः सामाजिकसम्पत्तेरात्मलाभाय यथेष्टमुपयोगे नाधिकृतो जनः, प्रत्युत समाजसम्पत्तेरात्मलाभायोपयोग अनैतिक एव। व्यक्तेरविनाभूता सम्पत्तिः। अहन्ताविनाभूता च ममता। यदा व्यक्तिरहमिति आत्मसत्तामनुभवति, तत्समकालमेव 'इदं मम कर्तव्यमधिकारो वस्तुजातं वा किञ्चिदि'त्यनुभवति। नहि ममत्वप्रतीतिमन्तरा अहन्तैकाकिनी क्षणमप्यवस्थातुमुत्सहते। तस्मादहमिति व्यक्तिभानानुगामिनी ममेति बुद्धिरेव सम्पत्त्यधिकारं समुद्भावयति। तथापि सम्पत्त्यधिकारसमर्थिका तद्विरोधिनी चेत्युभयविधा विचारधारा प्रत्नादेव कालादत्रोपलभ्यते। प्लेटोमहोदयस्य मतेन आदर्शप्रजातन्त्रवादे सर्वलोकसाधारणान्येवोपकरणानि स्वीकृतानि, न च सम्पत्त्यधिकारोऽङ्गीक्रियते। तद्वैपरीत्येन च अरिस्टाटिलमहोदयस्य मते सम्पत्तेः स्वातन्त्र्येण समुपयोगाधिकार आदर्शराज्ये अपरिहार्य एव। अद्यापि वैयक्तिकसम्पत्तिविषये अधिकारानधिकारमूलक एव अमेरिकारूसदेशयोर्भेदो विरोधश्च। किन्तु परमार्थतोऽहन्ताविनाभावित्वान्ममताया यावदहमिति व्यक्तिभावना जागर्ति, तावन्ममेति सम्पत्त्यधिकारबुद्धिरपि न समुच्छेत्तुं शक्या।

## समयाधिकारः ( राइट ऑफ काण्ट्रैक्ट )

सम्पत्त्यधिकारानुपाती च समयाधिकारः। व्यक्तिभेदेन सम्पत्तिभेदेऽङ्गीकृते यदा पुरुषान्तरस्य सम्पत्तेरुपयोगस्यावश्यकता भवति, तदा केनचित् समयेनैव ( काण्ट्रैक्ट ) सम्पत्त्यधिकारिणौ स्वसम्पत्तेर्विनिमयं विधत्तः। तस्मात् सम्पत्तिसमुपयोगाय समयाधिकारोऽपि स्वीकार्य एव। अनेनैव समयेन शारीरिकसम्पत्तियुक्तो बौद्धिकसम्पत्तियुक्तो वा मानव आर्थिकसम्पत्तियुक्तेन मानवेन सह सेवादिरूपेण स्वसम्पत्तेर्विनिमयं करोति। समयाधिकारेण सह न्यायोचितस्य समयस्य कर्तव्यताऽपि नियता। ततश्च दासत्वसमयोऽनैतिकः। समयाधिकारोऽयं समाजविकासक्रमेण विकासमधिगच्छति।

## शिक्षाधिकारः ( राइट ऑफ एजूकेशन )

शिक्षाधिकारोऽपि मानवस्य मौलिकोऽधिकारः। अस्मिन् शिक्षाविषये कर्तव्याधिकारयोरुभयोरप्येकत्र समावेशः। स्वशक्त्यनुरूपं सर्वोत्तमां शिक्षामुपलब्धुमधिकृतो जनस्तदुपलब्धिश्च तस्यावश्यकं कर्तव्यम्। विकसिते समाजे सर्वैरपि सदस्यैः शिक्षितैरेव भाव्यम्। शिक्षितैः सदस्यैरेव समाजस्याभ्युदयो वृद्धिश्च सम्भवति, नाशिक्षितैः। शिक्षा हि बुद्धिविकासमुपजनयति, आत्माभिव्यक्तये आत्मोत्कर्षाय च कल्पते। शिक्षाविषयकोऽधिकारो मानवस्य चरमो नैतिकोऽधिकारः। अत्र चाधिकारेणैव सह कर्तव्यस्यापि समावेशोऽस्ति। तस्मात् कर्तव्याधिकारावविनाभूतौ॥



# षोडशः परिच्छेदः

## धर्मः ( वर्च्यू )

### कर्तव्यधर्मयोर्भेदः ( ड्यूटीज एण्ड वर्च्यूज )

अनुष्ठेयं कर्म कर्तव्यमिति व्यवह्रियते, तदभ्यासजन्यश्चान्तरो धर्मः। भूयोऽनुष्ठानरूपादभ्यासवशात् कर्तव्यमेव धर्मरूपतया परिणमति। धर्मोऽभ्यासार्जितां मानसिकीं प्रवृत्तिं सूचयति। कर्तव्यानुष्ठाने सम्यगभ्यासवान् पुरुष एव धर्मनिष्ठो धार्मिक इत्युच्यते। धर्मः सच्चरित्रं कर्तव्याभ्यासशीलत्वं चावगमयति, कर्तव्यं च बाह्यमनुष्ठेयकर्ममात्रं निर्दिशति। एवं कश्चन पुरुषः स्वकर्तव्यं पालयति, तत्परिपालनजन्यश्चान्तरो गुणो धर्मः समुद्भवति। चरित्रस्योत्कर्षो धर्मः, कर्तव्यं च बाह्यो व्यापारः। कर्तव्यमुखेन धर्मस्य बाह्यप्रकाशनं भवति। एवमान्तरिकश्चरित्रोत्कर्षो धर्मः, धर्मस्य बाह्यप्रकाशनात्मकं च कर्तव्यम्। विचारपूर्वकं सदाचरणाभ्यासजन्यो धर्मः, विचारपूर्वकमसदाचरणाभ्यासजन्यश्चाधर्मः। मूलप्रवृत्तिरूपाणामैन्द्रियकवासनानां दमनानुकूलो जनस्यात्मसाक्षात्कारानुकूलश्चाभ्यासो धर्मः। मूलप्रवृत्तिरूपाणां वासनानां वशीभावेन तात्कालिकसुखलाभानुकूलो निःश्रेयसभूतात्मसाक्षात्कारप्रतिकूलश्चाभ्यासो अधर्मः। चरित्रस्योत्कर्षो धर्मः, चरित्रस्यापकर्षोऽधर्मः। कर्तव्यपालनेन धर्मस्य, पापकर्मानुष्ठानेन चाधर्मस्य प्रकाशनं भवति। एवं सदाचरणाभ्यासेन कर्तव्यानुष्ठानाभ्यासेन च धर्मोपार्जनम्, असदाचरणात्मकेन पापकर्माभ्यासेन चाधर्मोपार्जनं भवति। नहि धर्मः सहजः स्वाभाविको वा गुणः, किन्तु समुपार्जितो गुणः। वासनानां नियन्त्रणाभ्यासेन कर्तव्यपालनाभ्यासेन वा तस्य समुत्पत्तिर्भवति। एवं च कर्तव्याभ्यासजनितो धर्मः।

### धर्मो ज्ञानमभ्यासश्च ( वर्च्यू, नॉलेज एण्ड हैबिट )

यूनानदेशीयैः दार्शनिकैर्धर्मस्य विविधानि लक्षणानि विहितानि। सुकरातमहोदयस्य प्लेटोमहोदयस्य च मते सम्यग्ज्ञानात्मको धर्मः, अरिस्टाटिलमहोदयस्य च मते अभ्यासात्मको धर्मः। सम्यग्ज्ञानमेव धर्माचरणे प्रवर्तयति। नहि ज्ञानमन्तरा धर्माचरणं कर्तव्यपालनं वा सम्भवति। धर्मसम्यग्ज्ञाने च समुपजाते कर्तव्यं पालयत्येव जनो न तद्विमुखो भवति, न वाऽकर्तव्यपरायणो जायत इति सम्यग्ज्ञानमेव धर्मस्य प्रयोजकम्। नहि सम्यग्ज्ञानं विना धार्मिको जनः कश्चिदपि भवितुमर्हति। यदि वा कश्चिद् भवति, तदापवादरूपेणैवाकस्मिकतया भवति। अत एव ज्ञानमेव धर्मः। अज्ञानं चाधर्मः, नहि ज्ञानवान् कश्चिदधर्मे प्रवर्तते। तस्माज् ज्ञानमेव धर्मः, अज्ञानं चाधर्म इति सुकरातमहोदयस्य प्लेटोमहोदयस्य च मतम्।

तन्न समीचीनं प्रतिभाति। यदि त्वज्ञानमेवाधर्मस्तदा अज्ञानपूर्वकमनुष्ठितं कर्म न नैतिकं निर्णयमर्हति, न चाज्ञानवशादकर्मप्रवृत्तो जनः पापकर्मण उत्तरदायित्वं भजते।

अज्ञानेनैव मयैतत्कर्मानुष्ठितं न तु ज्ञात्वेति वचनमात्रेणैव च तदुत्तरदायित्वात् तत्फलभोगाच्च च विमुच्येत। किञ्च ज्ञानवतामपि बहूनां दृश्यत एवाधर्माचरणे प्रवृत्तिः। तथा चोक्तम्—

जानामि धर्मं न च मे प्रवृत्तिः, जानाम्यधर्मं न च मे निवृत्तिः।
केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि॥

इतीयं महाभारते दुर्योधनोक्तिरत्रानुसन्धेया। बहुसंख्याकानामकर्तव्यपरायणानामियमेव स्थितिः। ते हि सम्यग् विजानन्तोऽपि धर्मप्रतिकूलसंस्कारपाटवान्नहि तत्र प्रवर्तन्ते। जानन्तोऽपि चाधर्मे न तस्मान्निवर्तितुं प्रभवन्ति। तस्मान्नहि ज्ञानपूर्वकं कश्चिदधर्मे प्रवर्तत इति रिक्तं वचः।

## अरिस्टाटिलमहोदयस्य मतम्

सापेक्षाया मध्यावस्थाया ग्रहणस्याभ्यास एव धर्मो यस्य स्वरूपं व्यावहारिकज्ञानसम्पन्नाः पुरुषा निर्धारयन्तीति अरस्तूमहोदयस्य मतम्। बुद्धिमद्भिर्दूरदर्शिभिश्च पुरुषैर्विवेकबुद्ध्या निर्धार्यमाणस्य मध्यमार्गस्यानुसरणाभ्याससंयमापरपर्यायो मध्यमार्गनिर्वाचनाभ्यासो वा धर्मः। स हि प्रायश उभयकोट्यन्तरालवर्ती मध्यमार्गरूप एव भवतीति संयमपदेनापि व्यवह्रियते। तथा हि—भीरुताद्दुस्साहसयोरन्तरालवर्ती साहसाख्यो धर्मः, व्ययविलासिताकृपणतयोर्मध्यवर्तिनी दानशीलता, आत्मगुणानां विषये सत्यप्रियत्वं च दर्पहीनतयोरन्तरालवर्ती मध्यमार्गभूतो धर्मः। एते सर्वेऽपि धर्मा मध्यमार्गानुसरणरूपा एव। 'अति सर्वत्र वर्जयेत्' इत्यभियुक्तोक्तेरतिशयात्मकोभयकोटिव्यतिरिक्तस्तदन्तरालवर्ती मध्यमार्गात्मक एव धर्म इति अरिस्टाटिलमहोदयस्य मतम्।

अत्र च सत्यस्य भूयानंशो विद्यते एवेति नात्र संशयस्तथापि नैकान्तिकतया मध्यमार्गावलम्बनमात्रमेव धर्मस्य स्वरूपम्, कदाचिदतिशयोऽपि धर्मस्य प्रयोजको भवति। यथा युद्धकाले साहसातिशयो यथा वा देशभक्तेरतिशयो देशकल्याणायोपयुज्यते। तथा चैकान्तिकः संयमोऽपि सार्वत्रिकोऽसंयमवदेव दोषाधायको भवतीति मध्यमार्गसिद्धान्तोऽप्यस्वीकार्य एवेति म्यूरहेडमहोदयस्याभिमतम्।

तदेवं ज्ञानमेव धर्मः, मध्यमार्गाभ्यास एव धर्म इति सुकरात-अरिस्टाटिलमहोदययोर्मतभेदे समुपस्थिते सति मेकेंजीमहोदयोऽनयोरुभयोरपि मतस्य समन्वयं विदधाति। धर्मो ज्ञानमपि भवति, अभ्यासोऽपि। यो हि कर्तव्यक्षेत्रे निरन्तरं निवसति, स एव धर्मपरायणः पुरुष इति व्यवह्रियते। कर्तव्यक्षेत्रे निरन्तरं निवासोऽभ्यास एव, किन्तु स ज्ञानसाध्य एव। कर्तव्यनिर्णयार्थं ज्ञानमपरिहार्यं भवतीति ज्ञानं धर्म इत्यस्य मतस्याभिप्रायः। न च ज्ञानैकसाध्यो धर्मः, किन्तु कर्तव्याभ्यासजन्य इति अभ्यासो धर्म इत्यस्य मतस्याभिप्रायः। एवं सुकरातमहोदयस्यापि मतं समीचीनं अरिस्टाटिलमहोदयस्यापि च मतं समीचीनमिति समन्वयवादिनो मेकेंजीमहोदयस्याभिप्रायः।

## धर्माणां सापेक्षत्वम् ( रिलेटिविटी ऑफ वर्च्यूज )

देशकालपरिस्थित्यादिभेदेन मनुष्यैरर्जनीया धर्मा अपि भिद्यन्ते। प्राचीनकाले यूनानदेशे युद्धे शौर्यप्रदर्शनमेव साहसस्यार्थ आसीत्। अधुना तु न केवलं शारीरिकसाहसमात्रमेव, किन्तु नैतिकोऽपि साहसः साहसान्तर्भूतो भवति। प्राचीनकाले रणाङ्गणे

पराक्रमप्रदर्शनार्थं यद्धैर्यमपेक्षितमासीत्, तदव्यतिरिक्तमेव किञ्चिदपरमिव धैर्यमवलम्ब्याधुनिका वैज्ञानिका राजनीतिज्ञा विद्वांसश्च विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः प्रारब्धमुत्तमगुणा न परित्यजन्ति। न केवलं देशकालभेदेनैव भिद्यन्ते धर्माः, किन्तु पुरुषस्य सामाजिकी स्थितिरपि तत्र वैजात्यप्रयोजिका। सामाजिकस्थितिभेदादेव गुरुधर्माद् भिद्यते शिष्यधर्मः, स्वस्थपुरुषस्य कर्तव्याद् भिन्नमातुरस्य कर्तव्यम्, निर्धनस्य धर्माद् व्यतिरिक्तो धनिकस्य धर्मः, वृद्धानां कर्तव्याच्च भिन्नं यूनां कर्तव्यम्।

## मुख्यधर्मः ( कार्डिनल वर्च्यूज )

धर्मान्तराणामाश्रयभूतः कश्चन मुख्यो धर्मो भवति, स चान्येषां धर्माणां मूलभूतत्वाद् मौलिको धर्मः, आधारभूतत्वाच्च आधारभूतो धर्म इत्युच्यते। प्लेटोमहोदयेन बुद्धिमत्त्वं साहसः संयमो न्यायश्चेति चत्वारो मौलिका धर्मा निर्दिष्टाः। सर्वेषामपि कर्तव्यानां धर्मकार्याणामनुष्ठानं बुद्धिपूर्वकमेव भवतीति बुद्धिमत्त्वं तेषामाश्रयभूतो विवेकापरपर्यायो धर्मः, यो हि मनुप्रोक्तेषु दशसु धर्मलक्षणेषु धीःपदेन निर्दिष्टोऽस्ति। साहससंयमौ च पुरुषस्य जीवने सर्वाधिकमपेक्षितौ धर्मौ। भयप्रतिरोधी साहसो धैर्यापरपर्यायः प्रलोभनप्रतिरोधी च संयमो धर्मानुष्ठानाय कर्तव्यपालनाय चापरिहार्यो भवति। न्यायश्च जीवनस्वातन्त्र्यसम्पत्त्यादिसम्मानरूपाणां सर्वेषामपि सामाजिकधर्माणामन्तिमो भवति। एवं प्लेटोमहोदयस्य मौलिकधर्माणामिदं वर्गीकरणमाधुनिकव्यवस्थानुरूपमपि भवति।

प्लेटोमहोदयस्य इमे आधारभूता धर्मा आधारभूतत्वादेव धर्मान्तरगर्भिताः सन्ति। तदेवं बुद्धिमत्तायां चिन्ता विवेको दूरदर्शिताऽपूर्वदृष्टिर्निर्वचनस्थैर्यं चेति सर्वमपि समाविष्टं भवति। साहसे वीरताया धैर्यस्य चोभयोरपि समावेशो भवति। सक्रियः साहस एव वीरता, यो हि सत्यामपि विपच्छङ्कायां कर्तव्यपालनाय प्रेरयति। निष्क्रियश्च साहसो धैर्यम्, यो हि विघ्नैः पुनः पुनरपि प्रतिहन्यमानस्योद्योगिनो जनस्य विघ्नविजयाय प्रयत्नसाफल्याय च कल्पते। एवं च निर्णयः परिश्रमोऽध्यवसायश्चापि साहसान्तर्गत एवाभ्युपेयः। प्रलोभनप्रतिरोधात्मके संयमे च ऐन्द्रियकाणां बौद्धिकानां वा सर्वेषामपि सुखानां प्रलोभनस्य प्रतिरोधोऽन्तर्भूतो भवति। न्यायाख्ये तुरीये च धर्मे न केवलं सामाजिकनियमपरिपालनं समयपरिरक्षणमात्रमेव चान्तर्भूतम्, किन्तु विश्वासपात्रत्वं परोपकारः स्नेहः सुशीलता प्रसन्नता सौजन्यं विनोदश्चेत्येतत् सर्वमप्यन्तर्भूतं मन्तव्यम्। एवं प्लेटोमहोदयस्य धर्माणां विस्तृतां व्याख्यामवलम्ब्य यत्र तत्र किञ्चित् परिवर्तनमात्रेण प्राचीनमिदं वर्गीकरणमाधुनिकेऽपि नीतिशास्त्रे सम्यगुपयुज्यते।

## धर्माणां वर्गीकरणम् ( क्लासीफिकेशन ऑफ वर्च्यूज )

कर्तव्यविभागवत् ( १ ) स्वात्मविषयकः, ( २ ) परविषयकः, ( ३ ) आदर्शविषयकश्चेति धर्मस्यापि त्रिविधो विभागः। तत्राद्यो धर्मः कर्तुरेव शुभहेतुः, द्वितीयोऽपरेषां हितकरः, तृतीयश्च सत्यशुभसौन्दर्यादीनामादर्शानामन्यतमस्य साधकः। एवं त्रिविधो धर्मविभाग उपलभ्यते। किन्तु वस्तुतो भ्रममूलक एवायं विभागो न परमार्थः। यो हि धर्मो

वैयक्तिकं शुभं साधयति, सः सामाजिकं शुभमपि साधयत्येव, न तु तद्विरुणद्धि। एवं यो धर्मः सामाजिकं हितमुपजनयति, स वैयक्तिकं हितमपि साधयति। तस्माद् वैयक्तिकस्य सामाजिकस्य च शुभस्य भेदकं न किञ्चिदुपलभामहे इति भ्रान्त एवायं वैयक्तिकसामाजिकधर्मयोर्भेदः। एवमात्मविषयकाणां सौन्दर्यविषयकाणां च धर्माणामपि भेदः स्वेच्छाकृतः। सत्यसौन्दर्याद्यादर्शानां साधकोऽपि धर्मो व्यक्तेः समाजस्य च शुभाय सम्पद्यत एवेति परमार्थतस्तद्भिन्नः। तथापि प्राधान्याप्राधान्यविवक्षयैव सापेक्षोऽयं त्रिविधो विभाग इति मन्तव्यम्।

## व्यक्तिगतजीवनाय धर्माः ( वर्च्यूज ऑफ इण्डिविजुअल लाइफ )

संयमः संस्कृतिश्चेत्येतौ वैयक्तिकजीवनस्य मुख्यो धर्मः। बुद्धया वासनानां नियन्त्रणमेव नीतिशास्त्रस्य तत्त्वम्, तदेव च संयमपदवाच्यम्। आत्मानुशासनमेव संयमः, आत्मतृप्तिरिन्द्रियविलासिता चासंयमः। अस्य संयमस्य वासनाभिभवात्मको निषेधमुखप्रत्ययवेद्यो नैतिकप्रयोजनस्य केन्द्रीकरणमात्मसंयमश्च विधिमुखप्रत्ययवेद्यो भागः। तस्मात् संयमाख्योऽयं धर्मो निषेधात्मको विध्यात्मकश्चेत्युभयविधः।

चरित्रस्यान्तरिक उत्कर्ष एव संस्कृतिपदवाच्यो भवति। परिपूर्ण आत्मविकासो बौद्धिकः, भावात्मकः, क्रियात्मकः सङ्कल्पात्मकश्चेति जीवनसमाजस्यानुगतः सर्वतोमुखः परिपूर्णश्चात्मविकासः संस्कृतिपदवाच्यो भवतीति 'एथिकल प्रिंसिपल्स' इत्याख्ये ग्रन्थे ( पृ० २५४–५५ ) प्रतिपादितम्। न केवलं विविधशक्तीनां विकासमात्रम्, किन्तु सर्वासां शक्तीनां सामञ्जस्यानुगतः समरूपो विकासः संस्कृतिपदेनाभिप्रेतो भवति। सङ्कीर्णव्यक्तित्वस्य व्यापकव्यक्तित्वे विकास एव यथार्थो विकासः। स एव च परमार्थतः संस्कृतिपदवाच्यः।

साहससम्मानयोरपि वैयक्तिकधर्मेऽन्तर्भावो बोध्यः। यथा प्रलोभनप्रतिरोधात्मकः संयमो वैयक्तिको धर्मस्तथा भयप्रतिरोधात्मकः साहसोऽपि वैयक्तिको धर्मः। तस्य च नानारूपेण प्रकाशनं भवति। सक्रियः साहस एव वीरतेति, निष्क्रियश्च साहसो धृतिरिति व्यवह्रियते। विघ्नैर्दुःखैश्च बाध्यमानस्यापि स्वकार्ये स्थैर्यं 'कार्यं वा साधयेयं देहं वा पातयेयम्' इत्याकारको निश्चयरूपोऽध्यवसायोऽपि साहसभेद एव। शारीरिकः साहसो भीषणेऽपि कार्ये पुरुषं नियोजयति। एवं नैतिकः साहस उपहासं निन्दामाक्रोशं सामाजिकयन्त्रणां च साहयति। सर्वविधं तिरस्कारमप्यवाप्य स्वकर्तव्यपालनाय जनमुत्साहयति। सर्वेष्वप्येतेषु रूपेषु साहस एवैको नानारूपेणाभिप्लवते। स्वादर्शे स्वचरित्रं प्रति चादरबुद्धिरेवाऽऽत्मसम्मानपदवाच्या भवति। स्वादर्शं प्रति श्रद्धा, दृढतया स्वाधिकाराणां संरक्षणम्, स्वावमानिनं प्रत्यक्षमाभावश्चेत्येतत् सर्वमपि वैयक्तिकधर्मभूते आत्मसम्मानेऽन्तर्गतं भवति। एवं संयमः, संस्कृतिः, साहसः, सम्मानं चेति चत्वार आत्मविषयका धर्माः।

## सामाजिकधर्माः ( वर्च्यूज ऑफ सोशल लाइफ )

सामाजिकधर्मस्य निषेधात्मको विध्यात्मकं च द्विविधं रूपम्। तत्र निषेधात्मकं रूपं तत्सम्बद्धं च स्वतन्त्रतासमानतादिरूपं कर्तव्यजातं न्यायपदवाच्यं भवति। व्यक्तिगतजीवनस्याबाधनमनुपप्लवश्च न्यायस्य प्रयोजनम्। तच्च कस्यापि व्यक्तिगतजीवनस्य

विकासे हस्तक्षेपाकरणादेव सिद्धं भवति । यथा हि वैयक्तिककर्तव्येषु संयमः संस्कृतेः पूर्ववर्ती तदुपोद्बलकश्च, तथैवात्र सामाजिकेषु कर्तव्येषु न्यायोऽपि परोपकारस्य पूर्ववर्ती हेतुश्च । परेषां व्यक्तिगतजीवनस्याभिवर्धनं तत्र साहाय्यप्रदानं च परोपकारः, स च न्यायबुद्ध्यैव सम्पाद्यो भवतीति न्यायबुद्धिरेव परोपकारस्य हेतुभूता पूर्ववर्तिनी च । मानवजातेः परमोत्कर्षे निर्हेतुका मतिरेव परोपकारभावनायाः परमोत्कर्षः ।

प्रेमस्वामिभक्तिसम्मानसत्यप्रियतादीनामपि सामाजिककर्तव्येषु मुख्यं स्थानम् । स्नेहः, पित्रोर्वात्सल्यम्, दम्पत्योरनुरागः, मित्रयोः स्नेहः, सम्बन्धिनां सहानुभूतिश्चेति सर्वमप्येतत् प्रेमपदेनाभिप्रेतम् । आत्मबलिदानपरसेवाभावयोरप्यत्र समावेशः । आदौ नैसर्गिकमपि प्रेम यदा बुद्ध्या परिष्कृतं भवति, तदा स्नेहातिशयात् परहितायात्मानमपि विस्मारयति । यावांश्च कस्यापि न्यायप्राप्तोऽधिकारस्ततोऽप्यधिकं तस्मै प्रदातुं प्रगुणीभवति । भक्तिरपि प्रेम्ण एव विकसितं रूपम् । तदेवं प्रेमभक्त्यादयः सामाजिका धर्माः । ईश्वरभक्तिः श्रद्धा चेश्वरविषयको धर्मः । स हि भक्तस्य हृदि नम्रतां कृतज्ञतां शान्तिं समाधिसुखं चोपजनयति ।

बौद्धिकाः सौन्दर्यविषयका नैतिकाश्च धर्मा आदर्शविषयका धर्मा इति व्यवह्रियन्ते । सत्यानुसन्धानपरा न्यायविद्या, सौन्दर्यानुसन्धानपरं सौन्दर्यशास्त्रं मानवाचारस्यादर्शानुसन्धानपरं नीतिशास्त्रं चेत्येतत्त्रितयं नियामकं विज्ञानमादर्शविज्ञानं वा भवतीति पूर्वमेवोपपादितम् ।

## जातेराचारविचारौ ( इथास ऑफ ए पीपुल )

'शिशुर्व्यापिकाया नीतिमातुरुत्सङ्गे स्तन्यं पिबति'इति हेगलमहोदयेनैकत्र लिखितमस्ति । तस्यायमाशयो यद् जातेः सामान्ये आचारविचारस्य वातावरणे पोषितोऽभिवर्द्धितश्च बालको भवति । ब्रेडलेमहोदयेन 'यस्मिन् वातावरणे कस्या अपि जातेः समाजस्य वा सर्वोत्कृष्टाः सदस्या अभ्यासपूर्वकं निवसन्ति, जीवनं च यापयन्ति, स वातावरणविशेष एव तस्य समाजस्य तस्याश्च जातेराचारो व्यवहारश्चेत्यभिधीयते' इति परिभाषां कृत्वा 'यो जनः स्वजातेर्नैतिकताया उच्चतरां नैतिकतामभिकाङ्क्षति, सोऽनैतिकतायाः द्वारे समुपस्थितो भवति'इति लिखितम् । ब्रेडलेमहोदयस्य वचनमिदमत्युक्तिपूर्णमेव प्रतीयते, न तु परमार्थम् । नहि कस्या अपि जातेः नैतिकं वातावरणं स्थिरं वस्तु । तद्धि समाजस्य विकासेन सह विकासं ह्रासेन च समं ह्रासमधिगच्छति । तद्विकासस्य च कारणं तस्य समाजस्य सर्वोत्तमानां सदस्यानां स्वनैतिकस्तरादुच्चतरस्य स्तरस्य लाभाय विधीयमानोऽनवरतः प्रयास एव । तथापि कस्यापि देशस्य समाजस्य वा सर्वसाधारणो जनः स्वजातेः नैतिकमादर्शं न सर्वात्मनाऽधिगच्छति । ततस्तेन साधारणजनेन पूर्वं स्वजातेरादर्शलाभायैव प्रयत्नो विधेयो न तूच्चतरस्यादर्शस्य लाभाय । स्वजातेः स्ववर्गस्य वा आचारादर्शमनधिगत्य उच्चतरस्य वर्गान्तरस्य वाऽऽचारस्यानुसरणमनैतिकमेवेत्ययमेव चेद् ब्रेडलेमहोदयस्याभिप्रायस्तदा तु दोषः । "स्वधर्मे निधनं श्रेयः परधर्मो भयावहः" इति गीतावाक्यं चानुसरति ब्रेडलेमहोदयस्य गतम् ॥



# सप्तदशः परिच्छेदः

## अन्तरात्मा ( कान्शेन्स मॉरल फैकल्टी )

यो हि कर्मणां नैतिकं गुणमवधारयति, सदसद्भावं वा तेषां विवेचयति, स एवान्तरात्मा नीतिशास्त्रे 'कान्शेन्स'शब्देन व्यवह्रियते । "केनापि देवेन हृदि स्थितेन यथा नियुक्तोऽस्मि तथा करोमि" इत्यत्र स एवान्तरात्मा नियोजकत्वेन सङ्केतितः । नीतिशास्त्रे बहुविधं तद्विवेचनमुपलभ्यते ।

तथा हि—सुखवादिनोऽन्तःकरणात्मकं सदसद्विवेचकमन्तरात्मानं नाभ्युपगच्छन्ति । स्वार्थमूलकसुखवादिनो दूरदर्शितया आत्मस्नेहेन चास्याभेदं मन्वते । उपयोगितावादिनां नये सहानुभूतेरन्तरात्मनश्चाभेदः । विकासात्मकसुखवादिनां नये वंशक्रमागतसहानुभूतेरभिन्न एवान्तरात्मा । सहजज्ञानवादिनां मते बुद्धिसजातीयः सहजशक्तिविशेष एवान्तरात्मा । केचित् सौन्दर्यग्राहकं रसेन्द्रियात्मकम्, परे च नैतिकबुद्ध्यात्मकमिममभ्युपगच्छन्ति । बुद्धिपरतावादी काण्टमहोदयो व्यावहारिकबुद्धिरूपं नैतिकबुद्धिरूपं वा सदसद्विवेचकमन्तःकरणमवधारयति । पूर्णतावादिनां मते च नैतिकादर्शस्य सहजज्ञानोत्पादिका बुद्धिरेव तत्कार्यं करोतीति सैवान्तरात्मा ।

स्वार्थसुखवादिनां नये स्वसुखमात्रमेव सर्वस्याभिमतं निःश्रेयसरूपं च । तच्च सुखं कदाचित् तात्कालिकं कदाचिच्च दूरस्थं ग्राह्यं भवति । तत्र कदाचिद् दूरस्थं सुखमभिलक्ष्य तात्कालिकं सुखं हेयमपि भवति । एवं दूरस्थे सुखे दूरदर्शितैव सदसद्विवेकं करोति । स्वार्थापरपर्याय आत्मस्नेहस्तु तात्कालिके दूरस्थे च सुखे तुल्य एव प्रयोजक इति आत्मस्नेहो दूरदर्शिता च सदसद्विवेके हेतू इति तदभिन्न एवान्तरात्मा ।

उपयोगितावादिनो जेम्समिलप्रभृतयो बहूनां जनानां सामान्यं सुखमेव निःश्रेयसं मन्वते । जेम्समिलमहोदयेन लिखितं यदस्माकं मनसोऽनुभूतिरेव कर्तव्यस्यान्तरिक आदेशः । सा हि मनोनुभूतिर्यदा स्वार्थविहीना विशुद्धेन कर्तव्यविचारेण सम्बद्धा भवति, तदा सैवान्तःकरणस्यान्तरात्मनो वा तात्त्विकं रूपमधिगच्छतीति । तस्मात् सहानुभूतेरभिन्नस्तन्मतेऽन्तरात्मा । वेनमहोदयो बहिःस्थशासनस्यान्तरिकीमनुकृतिमेवान्तःकरणतत्त्वं मनुते । ततश्च राजनीतिकं नियमं प्रति सम्मानस्य भावो यो बहुजनसुखाय बहुजनहिताय च प्रवर्तयति, स एवान्तरात्मेति ।

तत्र दूरदर्शिता आत्मस्नेहश्च स्वार्थस्यात्ममात्रसुखस्य च निःश्रेयसरूपत्वं समर्थयतः । तच्च सर्वथा नैतिकताविपरीतम् । नहि स्वार्थसुखवादस्य विषयभोगजन्यमैन्द्रियकं सुखं विहायान्यत्र क्वचिदपि प्रवृत्तिरिति स्वार्थसुखवादो नैतिकतायाः स्थानेऽनैतिकतामेव प्रसारयति । तस्मान्नात्मस्नेहो दूरदर्शिता वा नैतिकनिर्णये समुपयुज्यते, न वा तन्नैतिकगुणा विवेकोपयोगिनोऽन्तःकरणस्यान्तरात्मनो वा स्थानेऽभिषेकं लभन्ते । एवमुपयोगितावादिनां

सहानुभूतिरपि परिवर्तनशीलसंवेगमात्रत्वाद् नैतिकबाध्यतायाः पुण्यपापयोः, पुरस्कार-दण्डयोर्वा विस्पष्टीकरणे समर्था भवति। तस्मान्न सहानुभूतिरपि नैतिकनिर्णयजनकस्यान्त-रात्मनः स्थानं लभते।

मार्टिन्यूप्रभृतीनां सहजज्ञानवादिनां नये नैतिकेन्द्रियसदृश अन्तरात्मा सममपि प्रादुर्भूतानां विरोधिनां संवेगानामापेक्षिकं नैतिकं मूल्यमपरोक्षतया गृह्णाति। परमस्मिन्नपि नैतिकेन्द्रियसिद्धान्ते नैतिकनिर्णयानां वैजात्यं नैतिकप्रगतिक्रमस्य च स्पष्टीकरणमशक्यमेव। यदेवैकस्य मते सत्कर्म, तदेवापरस्य मतेऽसत्। यदेव चैकस्मिन् काले सत्, तदेवापरस्मिन् कालेऽसदिति निर्णीयते। नैतिकेन्द्रियसिद्धान्ते चात्र निर्णयभेदे न किञ्चिद् व्यवस्थापकं निमित्तमुपलभ्यत इति न नैतिकेन्द्रियरूपोऽप्यन्तरात्मा।

शेफ्टसबरी-हचीसनप्रभृतीनां सहजज्ञानवादिनां मते कर्मणां सौन्दर्यग्राहको रसेन्द्रियात्मकोऽन्तरात्मा। सद्भाव एव सौन्दर्यमसद्भावश्चासौन्दर्यमिति कर्मणां सदसन्निश्चये सौन्दर्यग्राहको रसेन्द्रियात्मक एवान्तरात्मा, स च निर्भ्रान्तः। एतदपि मतं नैतिकेन्द्रियवादवत् तन्नैतिकनिर्णयानां वैजात्यस्य नैतिकबाध्यतादीनां च स्पष्टीकरणे समर्थमिति तत्तुल्ययोगक्षेमत्वादनादेयम्।

उडवर्थक्लार्कप्रभृतीनां दार्शनिकसहजज्ञानवादिनां बौद्धिकशक्तिविशेषोऽन्तरात्मा शाश्वतान् परिवर्तनीयान्नैतिकनियमान् सहजया स्फूर्त्याऽभ्रान्ततया गृह्णाति। यावदपरि-वर्तनीयानां नैतिकनियमानां ग्रहणस्य प्रश्नस्तावदन्तःकरणमिदमभ्रान्तम्, किन्तु यदा तेषां सामान्यनियमानां कर्मविशेषेषूपनयस्तर्केण सम्पाद्यते, तदा तत्र भ्रमः सम्भवति। अस्मिन् मते सामान्यनियमानां विशेषे उपनयेन नैतिकनिर्णयानामानुमानिकत्वमेव, तच्चोपनयदोषाभ्रान्तमपि सम्भवति।

## बटलरमहोदयस्य मतम्

बटलरमहोदयो ह्यात्मप्रेमपरोपकारान्तःकरणानि मानवस्वभावनिष्ठानि परस्पर-सङ्घटितानि त्रीणि बौद्धिकानि तत्त्वानीति मनुते। आत्मप्रेमपरोपकाराभ्यामुत्कृष्टतर-मन्तःकरणाख्यं तत्त्वम्। आत्मप्रेम स्वार्थमूलिकानां वासनानां नियमनं करोति, परोपकारः परार्थमूलिकानां वासनानां नियन्त्रणं करोति, अन्तःकरणं चात्मप्रेमपरोपकारौ नियमयति। तस्मादन्तःकरणमन्तरात्मा वा मानवप्रकृतेः सर्वोच्चं बौद्धिकं तत्त्वम्। तथैव च यादृशोऽस्याधिकारस्तादृक् चेद् बलं यादृक् चास्य प्रभुत्वं तादृशी चेच्छक्तिरत्रा-भविष्यत्, तर्हि समग्रस्य विश्वस्यायमेवान्तरात्मा शासकोऽभविष्यदिति बटलरमहोदयस्य वचनं सङ्गच्छते।

अयमन्तरात्मा मानवमात्रव्यापकः सामान्योऽन्तरात्मा। तथा च यदा नीतिशास्त्रे मूलसिद्धान्तभूतोऽन्तरात्मेति व्यवह्रियते, तदा नासौ व्यक्तिविशेषस्यान्तरात्मा, किन्तु व्यापकोऽन्तरात्मैव ग्राह्यः। व्यक्तिगतोऽन्तरात्मा तस्य व्यक्तिगतमानदण्डेनैव कर्मणां साधुत्वमसाधुत्वं वाऽवधारयति। दोषग्रस्ते च तस्मिन् वैयक्तिके मानदण्डे तस्यान्तरात्माऽपि दूषितो भवति। तथा च रस्किनमहोदयस्य शब्देषु तस्यान्तरात्मा गर्दभस्यान्तरात्माऽपि सम्भवति।

### काण्टमहोदयस्य मतम्

काण्टमहोदयस्य मते नैतिकबुद्धिरूपो व्यावहारिकबुद्धिरूपो वाऽन्तरात्मा। स हि शुद्धबुद्धितः सैद्धान्तिकबुद्धितो वा भिन्नसङ्कल्पात्मकः क्रियात्मकबुद्धिमयश्च मनुष्यजातिमात्रे विद्यमानो मनुष्यमात्रनिष्ठानां नैतिकसिद्धान्तानां विवेकं करोति।

### पूर्णतावादिनां मतम्

पूर्णतावादिनां मते चात्मसाक्षात्कार एव निःश्रेयसरूपः। नैतिकादर्शस्य तन्निःसृताना नैतिकसिद्धान्तानां च सहजज्ञानप्रयोजिका बुद्धिरेव। सा च बुद्धिर्न नैतिकस्य जीवस्यान्तरात्मनो व्यतिरिक्ता, किन्तु अन्तरात्मभूतैव शक्तिरिति समीचीनं मतं प्रतिभाति।

### अन्तरात्मनः शिक्षणीयता ( एजूकेबिलिटी ऑफ कान्शेन्स )

केषाञ्चित् सहजज्ञानवादिनां नये निर्भ्रान्त एवान्तरात्मा। किन्तु तस्याभ्रान्तत्वे नैतिकनिर्णयेषु वैजात्यं दोषदर्शनं च न सङ्गच्छते। अपरेषां सहजज्ञानवादिनां नये नैतिकनियमानां सहजज्ञानमात्रे निर्भ्रान्तोऽन्तरात्मा, किन्तु सामान्यनियमानामुपनये एव विपर्यस्यति। तन्मते नान्तरात्मनः शिक्षणम्, किन्तु उपनयप्रयोजिकाया बुद्धेरेव शिक्षणं सम्भवति। अन्येषां सहजज्ञानवादिनां च नये प्रारम्भेऽन्तरात्मा पूर्णतया विकसितो न भवति। प्रौढस्यान्तःकरणं शिशोरन्तःकरणापेक्षया विकसिततरं भवति। तस्मादन्तःकरणस्य शिक्षणमुखेन परिमार्जनं सम्भवति। काण्टमहोदयोऽपि निर्भ्रान्तत्वमन्तरात्मनोऽभ्युपगच्छति। काल्डर-उडमहोदयोऽपि शिक्षणागोचरत्वमेवान्तःकरणस्याङ्गीकरोति।

### समाजान्तःकरणयोः सम्बन्धः ( रिलेशन आफ कान्शेन्स एण्ड सोसाइटी )

अन्तःकरणमेव नैतिकादर्शानां नैतिकनियमानां चावधारणे प्रमाणम्। नैतिकादर्शश्च व्यक्तेः समाजस्य मङ्गलहेतुः परमनिःश्रेयसभूतश्चेत्यन्तरात्मैव समाजस्य कल्याणकरः। यस्मिंश्च समाजे निवसति जनः, स समाज एव व्यक्तेरन्तःकरणे नैतिकनियमानां स्वरूपविशेषमवधारयति। अन्तरात्मनः शब्दः प्रायो जनरवप्रतिध्वनिमात्रं भवति। मानवानां सम्बन्धं सामाजिकसंस्थानां बाह्यं वातावरणं चापेक्ष्यैवान्तरात्मा नैतिकनिर्णयं विधत्त इति समाजेन सहान्तरात्मनो घनिष्ठः सम्बन्धः। तथापि वातावरणे प्रगतिशीलो भवत्यन्तरात्मा। स हि व्यक्तेः स्थानानुरूपं कर्तव्यमवधारयति। ततोऽप्यधिकमुच्चतरमादर्शं व्यवस्थापयति, येन सामाजिकवातावरणेऽपि परिवर्तनं जायते। समाजोऽन्तःकरणे तन्निर्मितेषु नियमेषु च प्रतिबिम्बितो भवति, नैतिकान्तर्दृष्टियुतं चान्तःकरणं सामाजिकव्यवस्थायां प्रतिबिम्बितं भवति॥



# अष्टादशः परिच्छेदः

## नैतिकप्रमाणादेशौ ( मारल अथारिटी एण्ड मारल सेंक्शन्स )

### नैतिकी बाध्यता

यदा वयं कस्यापि कर्मणः साधुत्वमवधारयामस्तदा तन्निर्णयसमकालमेव तस्यानुष्ठानमपरिहार्यमावश्यकं च सञ्जायते। यदा वा कस्यापि कर्मणोऽसाधुत्वमवधार्यते, तदा तस्याननुष्ठानमपि नैतिकं कर्तव्यं भवति। तदेवमनयोः कर्तुरनुष्ठानाननुष्ठानयोर्नैतिकदृष्ट्या यदेतदपरिहार्यत्वमनुभूयते, तदेव नैतिकबाध्यतापदेन व्यवह्रियते। नैतिकनिर्णयानां प्रकृतिर्बाध्यतामूलिकैव भवति। किन्तु नैतिकबाध्यतायां नास्ति बलप्रयोगस्यावसरः। नहि बलप्रयोगेणानुष्ठीयमानं कर्म नैतिकनिर्णयगोचरं भवति। अनुष्ठानस्वातन्त्र्यमेव नैतिकताया मूलम्। तच्च बलप्रयुक्तेऽनुष्ठाने नोपयुक्तमिति नास्त्येव नैतिकबाध्यतायां बलप्रयोगावसरः। तथापि नैतिकदृष्ट्या तत्र कर्मविशेषस्यानुष्ठानेऽननुष्ठाने वा नैतिकी बाध्यता भवति। सा चेयं बाध्यताऽन्तरात्मप्रयुक्ता आत्मनिष्ठा च, न त्वात्मव्यतिरिक्तस्तत्र कश्चिदन्यः प्रयोजकः। तथापि विषयेऽत्र विविधाः परिकल्पना दृश्यन्ते।

तत्र सुखवादिनां नये आत्मप्रेमैव नैतिकबाध्यतायां प्रयोजकं प्रमाणं च। स्वार्थसुखवादिनां सर्वाण्यपि कर्माणि स्वार्थमात्रप्रयुक्तानि भवन्तीति तेषामौचित्यानौचित्ये आत्मप्रेमापरपर्यायः स्वार्थ एव प्रमाणमिति यदेव कर्म स्वसुखसम्पादकं तदेव सत्, तद्विपरीतं चासदिति आत्मप्रेमैव नैतिकतायां प्रयोजकं नैतिकबाध्यतायां प्रमाणं च। किन्तु परमार्थतो मतमिदं न नैतिकताप्रयोजकम्, किन्तु तद्विघातकमेवेति पूर्वं प्रतिपादितम्।

परार्थसुखवादिनां बेन्थमप्रभृतीनां मते भौतिकाः, सामाजिकाः, राजनीतिकाः, धार्मिकाश्चेति चतुर्विधा बाह्यादेशा एव कर्मणामौचित्यानौचित्यावधारणे प्रमाणमिति त एव नैतिकबाध्यतायां प्रयोजकाः। प्रकृतेः, समाजात्, राज्यादीश्वराद् वा भयेन जनोऽनैतिकात् कर्मणो विरमते; नैतिके च कर्मणि प्रवर्तत इति त एव बाह्यादेशा नैतिकबाध्यतायां प्रमाणम्। तदेतदपि मतं दण्डपुरस्कारादिमूलकत्वादनुष्ठानस्वातन्त्र्यं कर्षति, बलप्रयुक्तामिव च कर्तव्यतामापादयतीति नैतिकताया मर्यादामतिक्रामति।

जेम्समिलमहोदयो बेन्थममहोदयस्य बाह्यादेशैः सममान्तरिकमादेशमप्यपरं संयोजयति। तन्मते बाह्यादेशचतुष्टयमान्तरिकादेशश्चेति पञ्चकं कर्मणामौचित्यानौचित्यावधारकं भवति। तत्र प्राकृतिकनियमानामुल्लङ्घनजन्यं दुःखं तदुल्लङ्घनान्निवर्तयति पुरुषम्। स एव प्राकृतिकादेशः। एवं राजाज्ञाया राजनियमस्य वा समुल्लङ्घनाद् राजा, समाजनियमस्य समुल्लङ्घनाद् समाजः, ईश्वराज्ञायाः समुल्लङ्घनादीश्वरश्च दण्डयतीति बाह्या एते

राजनीतिकाः, सामाजिकाः, धार्मिकाश्चादेशा पुरुषं यथाक्रमं राजनियमात् समाज-नियमादीश्वरनियमाद् विमुखीभवतो जनान् ततो निवर्तयन्ति, तदनुकूले च कर्मणि प्रवर्तयन्ति। तत्रोत्तरे त्रयोऽपि भौतिकादेशमुखेनैव प्रभावमुत्पादयन्तीति भौतिकादेशः परेषु त्रिष्वप्यादेशेषु मूलभूतः। एते सर्वेऽपि बाह्यादेशाः 'मिल'महोदयस्यान्तरिकादेशसहिता अनुष्ठानस्वातन्त्र्यमपकर्षन्तीति नैतिकाताया मूलमेवानुष्ठानस्वातन्त्र्यं विनाशयन्ति। तस्मादेतदपि मतमनुपादेयमेव।

विकासात्मकसुखवादिनामपि बाह्या आदेशा एव नैतिकबाध्यतायाः प्रयोजकाः। राजनीतिक-सामाजिकधार्मिकाधिकारिभ्य एव जनो नैतिकं कर्तव्यं शिक्षते स्वकीयमिति तन्मतेऽपि दण्डस्य भयमेव नैतिकबाध्यतायाः प्रयोजकम्। हर्बर्टस्पेन्सरमहोदयस्य मते नैतिकी बाध्यतेयमल्पस्थायिनी व्यक्तिसमाजयोरसामञ्जस्यजनिता च। समायाते तु स्वर्ग-राज्ये समुपजाते च व्यक्तिसमाजयोः सामञ्जस्ये न स्थास्यति विलयं च समेष्यति नैतिकी बाध्यता। तदपि न समीचीनम्; यथा यथा नैतिकी प्रगतिर्जायते, तथा तथा नैतिका-दर्शस्यापि विकासः सञ्जायते। मानवः सदैव नैतिकक्षेत्रे स्थास्यति। नहि नैतिकजीवनस्य समाप्तिः कदापि सम्भाव्यते।

सहजज्ञानवादिनां नयेऽन्तःकरणमेव नैतिकबाध्यतायां प्रमाणम्। बटलर-महोदयस्य मते मानवप्रकृतिजमन्तःकरणमेव सर्वोत्तमं तत्त्वम्। तच्च बाह्यशक्त्यनपेक्षमेव नैतिकबाध्यतायां प्रमाणम्। यत्किमपि सत्कर्म तन्निसर्गतो बाध्यतामूलकम्। क्वचिदपि कर्मणि बाध्यता च तदौचित्यमूलिकैवेति नैतिकबाध्यतौचित्ययोः विश्लेषणात्मकः (एनैलैटिक) सम्बन्धः। सदिति ज्ञानमात्रात् तत्र कर्मणि नैतिकी बाध्यता प्रतीयते। किन्तु मार्टिन्यूमहोदयस्य मते ईश्वर एव नैतिकबाध्यतायाः प्रयोजकः। यथा हि वैधानिकी बाध्यता पुरुषद्वयसम्बन्धापेक्षिणी, तथैव नैतिकी बाध्यतापि। तत्र जीवेश्वरावेव नैतिक-बाध्यताया द्वावन्तौ। मानवदेहे ईश्वरप्रतिबिम्बरूपो जीव एव नैतिकताया अधिकारिपक्षः, जीवे व्याप्तश्चेश्वरो नैतिकताया उद्गमभूतो द्वितीयः पक्षः। यद्यपि सहजज्ञानवादानुयायी एव मार्टिन्यूमहोदयः तथापि, तन्मते ईश्वर एव नैतिकतायां प्रयोजकः प्रमाणं च।

काण्टमहोदयस्य मते निरपेक्ष एव नैतिकतानियमः प्रभुत्वसम्पन्नश्च। व्यावहा-रिकी बुद्धिरात्मनैवात्मानं बध्नाति। सङ्कल्पस्वातन्त्र्यमेव सति प्रवर्तकम्, असतश्च निवर्तकं भवति, न तु किञ्चिदपरं निमित्तान्तरमपेक्षते। काण्टमहोदयस्य मतमिदं तथ्यकल्पमपि न सर्वथा यथार्थम्। व्यावहारिकी बुद्धिरात्मनः शक्तिविशेषमात्रमिति न तत्कृतो नियम आत्मकृतः।

पूर्णतावादिनां च मते आत्मैव नैतिकबाध्यतायां प्रयोजकः। तत्रात्मनो यथार्थ-मादर्शभूतं चेति रूपद्वयम्। तत्रादर्शभूत आत्मा यथार्थमात्मानं नैतिके कर्मणि नियुङ्क्ते। नह्यात्मव्यतिरिक्तं किञ्चिदपि बाह्यमान्तरं वा निमित्तान्तरं नैतिकबाध्यतायां प्रयोजकम्। आत्मा हि स्वरूपसाक्षात्काराय स्वत एवात्मानं नैतिकबाध्यतया संयुनक्ति। ग्रीनमहोदयस्य मते राज्योक्ते धर्मोक्ते च नियमेऽपि पुरुषस्यात्मैव प्रयोजको न तु

किञ्चिदपरं बाह्यमान्तरं वा निमित्तान्तरम् । आदर्श आत्मैव नैतिकनियमस्य चरम आश्रयः । स चान्तःकरणादपि प्रबलः प्रभुत्वसम्पन्नश्च । परिच्छिन्नोऽयं जीवात्मा अपरिच्छिन्नस्य ब्रह्मणः प्रतिबिम्बभूतः । तत्र परिच्छिन्ने जीवात्मनि व्याप्तमपरिच्छिन्नं ब्रह्म नैतिकताया मूलम् । कर्तव्यबुद्धिर्हि न बाह्यादेशप्रयुक्ता, किन्तु आदर्शस्यात्मन आह्वानभूता । अयमेव चरमः सिद्धान्तपक्षः ।

तदेवं नैतिकतायां किं प्रयोजकं प्रमाणं चेत्यत्र विप्रतिपत्तयः प्रदर्शिताः । स्वार्थसुखवादादारभ्य पूर्णतावादपर्यन्तं नैतिकबाध्यतायां विविधानि निमित्तानि प्रयोजकत्वेनाभ्युपेयन्ते । तान्येव नैतिका आदेशा इत्युच्यन्ते । पुरस्कारप्रलोभनेन क्वचिदिष्टे कर्मणि प्रवर्तयति, दण्डभयेन चानिष्टात् कर्मणो निवर्तयति यः, स एव 'आदेश' इत्युच्यते ॥



# एकोनविंशः परिच्छेदः

## नैतिकी प्रगतिः

### नैतिकादर्शो नैतिकी गतिश्च

नैतिकस्यादर्शस्य उत्तरोत्तरं प्रगतिर्विकासश्च 'नैतिकी प्रगतिः इत्युच्यते, न त्वनैतिकताया नैतिकतां प्रति गतिरिह नैतिकी प्रगतिः। हर्बर्टस्पेन्सरमहोदयो नीतिविरहितात् पशुव्यवहारादेव नैतिकताया विकासं प्रतिजानाति। किन्तु नीतिशून्यात् पशुव्यवहारान्नैतिकतायाः समुत्पत्तावभ्यनुज्ञायमानायाम् अभावाद् भावोत्पत्तिसिद्धान्तो दत्तावलम्बः स्यात्। अतोऽनैतिकताया नैतिकतां प्रति प्रगतिरिह नैतिकी प्रगतिर्नाभ्युपेया। प्रत्युत नैतिकादर्शस्य प्रगतिः प्रगतिशीला वा नैतिकतैवात्र नैतिकी प्रगतिः। स च नैतिकादर्शोऽपरिच्छिन्नोऽनन्तश्चेति। यथा यथा समाजस्य नैतिकी प्रगतिरभिवर्धते, तथा तथाऽनैतिकादर्शोऽपि दूरमुपयाति दुर्लभतां च प्रपद्यते। क्षितिजमिव नहि कश्चिन्नैतिकादर्शं स्प्रष्टुं क्षमो न वा तनुच्छायसमं तमतिक्रान्तुमपि कश्चित् समर्थः।

### व्यक्तेरनुसन्धानमेव नैतिकप्रगतेः प्रयोजकम्

सेथमहोदयो व्यक्तेरनुसन्धानमेव नैतिकप्रगतेर्मूलं मनुते। आदौ व्यक्तेर्व्यक्तित्वं स्वपरिवारे समाजे वा सर्वथैव विलीनमिवासीत्। कालक्रमेण समाजात् परिवाराद्वा पृथगिव स्वव्यक्तित्वं कैश्चित् प्रत्यभिज्ञातम्। ततश्चास्या व्यक्तेरनुसन्धानपरम्परयैव नैतिकी प्रगतिः प्रवृत्ता। जातेर्व्यक्तेश्च नैतिकप्रगतेराधारभूतो नियमस्तत्त्वत एकेनैव रूपेणाभिव्यज्यते। आदर्शव्यक्तेरनुसन्धानायैव नैतिकोत्कर्षः प्रवर्तमानो दृश्यते।

### नैतिकप्रगतिनियमस्य विभिन्नाः पक्षाः

आदर्शव्यक्तेर्नैतिकस्य पुरुषस्य वाऽनुसन्धानाय येयं नैतिकी प्रगतिरिहोपलभ्यते, तस्याः सामान्यतस्त्रयः पक्षाः सन्ति—

१. तत्रादौ नैतिकताया बहिर्मुखीं प्रवृत्तिं परित्यज्य तत्स्थानेऽन्तर्मुखी दृष्टिः प्रवृत्तेति प्रथमं सोपानम्। पूर्वमुपयोगितादृष्ट्या कर्मणां बाह्यं मूल्यं विहाय आन्तरिकमाध्यात्मिकं वा मूल्यमवधारयितुं व्यवहाराणां परिणामानां च स्थाने चरित्रस्य प्रवृत्तीनां च मूल्याङ्कनं कर्तुं प्रवृत्तिरुत्पन्ना। पूर्वं व्यवहाराणां परिणामानां च नैतिकं मूल्यमवधार्यते स्म, तत आन्तरोद्देश्यानामभिप्रायाणां च, ततश्च चरित्रस्य मूल्याङ्कनं प्रवृत्तम्। पूर्वं व्यवहारस्य शुद्धतैवाभिप्रेतासीत्, तदनन्तरं चान्तरिकजीवनस्य शुद्धता लक्ष्यतां प्रपेदे। पुरुषः किं करोतीत्यस्य स्थाने कीदृक् चरित्रं तस्येत्येव विवेचनाविषयत्वमवगाहते। इदमेव नैतिकप्रगतेः प्रथमं सोपानम्।

२. नैतिकप्रगतेः द्वितीयसोपाने शूरत्वादीनां कठोरधर्माणां स्थाने मृदुधर्मा अभिषिक्ताः। शूरत्वादीनां कठोरधर्माणां मृदुधर्मेषु संक्रमणकाले सत्तासंघर्षस्य

रक्षाव्यापारस्य वा सौजन्येऽसहानुभूतिपूर्णस्य व्यवहारस्य सहानुभूतिपूर्णे व्यवहारे परिवर्तनं जातम्। पूर्वं साहसपौरुषशूरत्वादिकठोरधर्माणामादरातिशय आसीत्। पश्चात् तत्स्थाने सहानुभूतिः, परोपकारिता, क्षमाशीलता, आज्ञाकारिता, नम्रता, धैर्यम्, आत्मसमर्पणं चेत्येवमादयो मृदुधर्माः समाद्रियमाणा दृश्यन्ते। इदं नैतिकप्रगतेः द्वितीयं सोपानम्।

३. धर्माणां क्षेत्रस्य विस्तारश्च तृतीयं सोपानम्। यथा यथा पुरुषस्य नैतिकी प्रगतिर्भवति, तथा तथा 'आत्मवत् सर्वभूतेषु', 'वसुधैव कुटुम्बकम्' इत्येवमादिरूपा तस्य बुद्धिः समुदेति। तदा स न केवलं स्वसमाज एव, किन्तु "ब्राह्मणे गवि हस्तिनि। शुनि चैव श्वपाके च पण्डिताः समदर्शिनः" इति सर्वत्र समबुद्धिर्भवति। तदा व्यक्तिपरिवारदेशादि-सीमा सर्वथा विलुप्यत इव। मानवीयसीमामप्यतिक्रम्य गवि हस्तिनि शुनि चापि समदर्शी जायते मानवः। इदमेव नैतिकप्रगतेस्तृतीयं सोपानम्। ग्रीनमहोदयस्य मतेऽन्तर्दृष्टेर्गाम्भीर्य-मपि नैतिकप्रगतेर्लक्षणम्। पूर्वं युद्धक्षेत्रे प्रदर्श्यमानः शारीरिकः साहस एव साहसस्य स्वरूपमासीत्, इदानीं तु नैतिकसाहसस्याप्यत्र समावेशो दृश्यते।

## नैतिकप्रगतेर्हेतुः

आदर्शानां नैतिकसंस्थानां मानवाभ्यासानां चासामञ्जस्यमेव प्रायो नैतिकप्रगते-र्मूलम्। यदा समाजस्य व्यक्तेर्वा आदर्शः कश्चिदपर एव भवति, परितो विद्यमानं सामाजिकं वातावरणं च ततो विलक्षणं भवति, तदा तयोर्विरोधं परिहर्तुं सुधारका महा-पुरुषाः प्रयतन्ते। तत्परिणामरूपा च नैतिकी प्रगतिर्भवति समाजस्य। एवं यदा मानवा-दर्शानां च विरोधो भवति, तदा तत्परिहारप्रयत्नेन नैतिकी प्रगतिरभिव्यज्यते। सामाजिक-संस्थानां मानवाभ्यासानां च मानवादर्शाद् यो विरोधोऽसामञ्जस्यं वा भवति, तदपनोदनाय क्रियमाणः प्रयत्न एव नैतिकप्रगतेर्मुख्यो हेतुः। तदसामञ्जस्यपरिहारायैव महापुरुषाणां सुधारकाणां च प्रवृत्तिः। मनुष्यस्यान्तःस्थोऽपरिच्छिन्न आत्मा नैतिकताविकासस्य लक्ष्यमीश्वरत्वमेव विचारयति। ततः स वास्तविक्या सामाजिकराजनीतिकार्थिकव्यवस्थया न तुष्यति, परिपूर्णस्वरूपस्येश्वरत्वस्य लाभाय स्पृहयते। अत एव काल्पनिकस्वर्गसदृशाना-मलौकिकस्वप्नानामपि कदाचिद् द्रष्टारो भवन्ति सुधारका महापुरुषाः। किन्तु तादृशा आदर्शास्तेषामव्यावहारिका एव भवन्ति। वस्तुतस्तदा स्वादर्शप्रकाशेनान्धीभूता इव ते न यथार्थं जगत् परिपश्यन्ति।

## किं नैतिकदृष्ट्या प्रगतिशीला मनुष्यजातिः ?

अतीतकाले जनानां जीवनं साधारणमासीत्। तेषामावश्यकता न्यूनतरा आसन्निति तासां परिपूर्तिरपि सुलभासीत्। अत एव तेषामधर्मप्रवृत्तेरवसरोऽपि स्वल्प एवासीत्। किन्त्वद्यास्माकं जीवनमतिजटिलम्, आवश्यकताश्च बहुला जाता इति तासां पूर्तये भूयान् प्रयत्नः संघर्षश्चापेक्षितः। अत एव लोकानामधर्मप्रवृत्तेः प्रतिपदमवसराः समुत्पद्यन्ते, महान्ति च भवन्ति प्रमादस्थानानि। तथा च कयाचिद् दृष्ट्याऽभ्युन्नता अपि वयं प्रकारा-न्तरेण पूर्वापेक्षया पतिता अपि सञ्जाताः॥



# विंशः परिच्छेदः

## सङ्कल्पस्वातन्त्र्यम्

मानवो हि स्वसङ्कल्पे स्वतन्त्रः परतन्त्रो वेति विषये मतभेदो दृश्यते दार्शनिकानां विदुषाम्। तत्र केचिच्चेतनत्वादात्मनः सङ्कल्पस्वातन्त्र्यं प्रतिजानते, ते सङ्कल्पस्वातन्त्र्यवादिनो नियतिवादिनो वेति समाख्यायन्ते। परे तु कारणतन्त्रत्वात् कार्यमात्रस्य, अदृष्टेश्वरेच्छाधीनत्वाद् वा सङ्कल्पस्य नियतत्वमभ्युपेत्य सङ्कल्पस्वातन्त्र्यसिद्धान्तं प्रत्याचक्षते। ते च नियतिवादिन इत्याख्यायन्ते। तत्र नियतिवादिनां स्वपक्षसमर्थने प्रयुज्यमाना अधोलिखिता वाचोयुक्तयः सन्ति। तासु च मनोवैज्ञानिकदार्शनिकधार्मिकाणां तत्त्वानामंशतः समावेशो विद्यते।

## नियतिवादे युक्तिपञ्चकम्

१. तत्र मनोवैज्ञानिकदृष्ट्या सङ्कल्पानां प्रयोजिकाः काश्चित् प्रवर्तना भवन्ति। सरले सङ्कीर्णे च कर्मणि काचिदेकैव प्रवर्तना सङ्कल्पस्य तदुद्भूतस्य च कर्मणो निर्णयं करोति। पक्षप्रतिपक्षाभ्यामुभयत आकृष्यमाणे जटिले सङ्कीर्णे च कर्मणि सङ्कल्पात् पूर्वं विरोधिनीनां नानाविधप्रवर्तनानां सङ्घर्षो भवति। तत्र च सङ्घर्षे बलवत्तमा प्रवर्तनैव विजयते, सैव च सङ्कल्पं प्रयोजयति। ततश्च सङ्कल्पस्य प्रवर्तनाप्रयोज्यत्वं नियतमेव, न तु स्वातन्त्र्यं तत्रात्मनः।

किञ्च, न केवलं प्रवर्तनाप्रयोज्यत्वमेव सङ्कल्पस्य, किन्तु प्रवर्तनानामप्यात्मलाभोंऽशतो बाह्यपरिस्थित्यादिवशाद् अंशतश्च पुरुषस्य मानसिकरचनावैशिष्ट्याद् भवति। तत्रापि च मानसिकरचनावैशिष्ट्यमप्यंशतो वंशक्रमागतसंस्कारवशाद् अंशतश्च पुरुषस्य स्वगतवैशिष्ट्यादुत्पद्यते। ततश्च सङ्कल्पस्य प्रवर्तनाधीनत्वात् प्रवर्तनानां च प्राक्तनसंस्कारपरिस्थित्याद्यधीनत्वाद् नियतासु परिस्थितिषु सङ्कल्पस्य नियतत्वमेव भवति, नानियतत्वम्; न वा स्वातन्त्र्यं भवति तत्रात्मनः। यथा च जलधरपटलदर्शनाद् वृष्टेः, काले मेघवर्षणात् सस्यसम्पत्तेर्वा पूर्वानुमानं सम्भाव्यते; एवं परिस्थित्यादिपरिज्ञानात् सङ्कल्पानामपि पूर्वानुमानं सञ्जायत एव। तस्मान्नियतत्वमेव सङ्कल्पानाम्, न तु कथञ्चिदपि सङ्कल्पस्वातन्त्र्यम्।

२. किञ्च, सङ्कल्पस्वातन्त्र्यसिद्धान्तः कार्यकारणसिद्धान्तविरुद्धत्वादनुपादेयः, नियतिवादश्च कार्यकारणसिद्धान्तानुरूपत्वात् सर्वथाप्युपादेयः। तस्मान्न सङ्कल्पस्वातन्त्र्यम्।

३. किञ्च, ईश्वरस्य सर्वज्ञताऽपि सङ्कल्पस्वातन्त्र्यसिद्धान्तं विरुणद्धि। यदीश्वरः सर्वज्ञोऽस्ति, तर्हि सर्वेषामपि सङ्कल्पं पूर्वत एव विजानाति। ततश्चेश्वरज्ञानानुरूपमेव

सङ्कल्पं कर्तुं प्रभवति पुरुषः, न तु तद्विपरीतं स्वतन्त्रतया कथमपि सङ्कल्पं कर्तुम्। तस्मादपि नियतत्वमेव सङ्कल्पस्य, न तु स्वातन्त्र्यं तत्र पुरुषस्य।

४. किञ्च, सर्वेश्वरत्ववादिनामद्वैतवादिनां वा मते ब्रह्मव्यतिरिक्तं सर्वमपि वस्तुजातमसत् प्रातिभासिकं च। ततश्च 'ब्रह्म सत्यं जगन्मिथ्या' इति वादिनां नये जगदन्तर्गतं मनोऽपि प्रातिभासिकमसत्कल्पमिति न सङ्कल्पस्वातन्त्र्यं सम्भवति। ततश्च स्पिनोजामहोदयेनापि लिखितं यत् सङ्कल्पमिति न सङ्कल्पनिर्धारकाणां कारणानामपरिज्ञानादेव वयं सङ्कल्पस्य स्वातन्त्र्यं प्रतिपादयामः, न तु वस्तुतः पारमार्थिकं सङ्कल्पस्वातन्त्र्यम्। यथा कश्चित् पुरुषः प्रस्तरखण्डं प्रक्षिपति, तत्र स प्रस्तरखण्डः स्वप्रगतेः कारणमजानन् स्वगतौ स्वतन्त्रमात्मानमभिमन्येत; तद्वदेव प्रवर्तकानां कारणानामपरिज्ञानवशादयमस्माकं सङ्कल्पस्वातन्त्र्याभिमानो मिथ्यैव।

५. किञ्च, वैज्ञानिकाः शक्तेर्द्रव्याणां गतेश्च नियतत्वमभ्युपगच्छन्ति। सङ्कल्पस्वातन्त्र्यसिद्धान्ते च सङ्कल्पविशेषान्मनसि शक्तिविशेषसमुद्भवस्यापि सम्भवात् शक्तेर्नियतत्ववादो विरुद्ध्येत। तस्मादपि सङ्कल्पस्वातन्त्र्यसिद्धान्तोऽवैज्ञानिकः।

एवं युक्तिपञ्चकेन नियतिवादिनः सङ्कल्पस्य नियतत्वमवधारयन्ति, स्वातन्त्र्यं च प्रत्याचक्षते।

## नियतिवादनिरासः

१. सङ्कल्पस्वातन्त्र्यवादिनश्च सङ्कल्पानां प्रवर्तनाप्रयोज्यत्वेऽपि तासामात्ममात्राधीनत्वान्न बाह्यकारणाधीनाः सङ्कल्पाः, किन्तु प्रवर्तनानामप्यात्मतन्त्रत्वादात्मैव सङ्कल्पानामवधारको न तु तद्व्यतिरिक्तं किञ्चिन्निमित्तान्तरमिति सङ्कल्पे स्वातन्त्र्यमेवात्मनः।

२. न च कार्यकारणभावविरोधी सङ्कल्पस्वातन्त्र्यसिद्धान्तः। नहि कार्यकारणशृङ्खलाविनिर्गतमुच्छृङ्खलं सङ्कल्पस्वातन्त्र्यमस्मदभिप्रेतम्। सङ्कल्पानामभ्यावृत्त्या चरित्रस्य निर्माणं भवति। तुल्यश्च सङ्कल्पो व्यक्तिभेदेऽपि तुल्यमेव चरित्रं निर्मिमीते। ततश्च तासामिच्छानां प्रवर्तनानां च साम्यमपि भवति। तस्मात् परिस्थित्यादिपरिज्ञानात् सङ्कल्पानां पूर्वज्ञानमपि सम्भाव्यते। बहुशो यथार्थमपि तादृगनुमानं न सर्वथा व्यभिचरति। विशिष्टायां परिस्थितौ पूर्वानुमानविपरीता अपि सङ्कल्पा दृश्यन्ते जनानाम्। तस्मादेव सङ्कल्पभेदः कर्मभेदश्च दृश्यमानः सङ्कल्पस्वातन्त्र्यमन्तरा नोपपद्यत इति सङ्कल्पस्वातन्त्र्यपक्ष एव ज्यायान्।

३. न वा ईश्वरस्य सर्वज्ञताविरोधी स्वातन्त्र्यसिद्धान्तः। विषयमनुगच्छति ज्ञानम्, न तु विषयो ज्ञानमनुगच्छति। नहीश्वरस्तथा विजानातीति पुरुषस्तथा सङ्कल्पयति, किन्तु पुरुषोऽयं तस्मिन् काले तथा सङ्कल्पयिष्यतीति विजानातीश्वरः। तस्मादेतदज्ञानं स्वातन्त्र्यं पुरुषस्य व्याहन्ति। तथात्वे तु कर्मणां नैतिकं मूल्यं पुरुषाणामुत्तरदायित्वं कर्मफलं च सर्वमपि परिसमाप्येत। तस्मादपि सङ्कल्पस्वातन्त्र्यमेव।

४. न वा सङ्कल्पस्वातन्त्र्यसिद्धान्तो नियतशक्तिवादसिद्धान्तं विरुणद्धि। नहि सङ्कल्पबलेन शक्तिरपरिमाणमभिवर्धते, किन्तु शक्त्यन्तरपरिणामवत् शक्तेर्दिशैव परिवर्तते।

५. न वा मायावादसिद्धान्तोऽप्यैकान्तिक इति नियतिवादिनां युक्तयो निरस्ताः ।

## सङ्कल्पस्वातन्त्र्यसमर्थिका युक्तयः

आत्मसाक्ष्यमेव सङ्कल्पस्वातन्त्र्ये प्रमुखं प्रमाणम् । सङ्कल्पस्य करणे आत्मस्वातन्त्र्यं सर्वजनानुभवसिद्धं प्रत्यात्ममनुभूयते । कर्मणां नैतिकं मूल्यमपि सङ्कल्पस्वातन्त्र्यमन्तरा नोपपद्यते । किञ्च, सङ्कल्पस्वातन्त्र्याभावे विश्वस्य यथार्थं स्वरूपमपि न विस्पष्टं भवति, न वोपपद्यते । ईश्वरो जीवः प्रकृतिश्चेति तत्त्वत्रयं विश्वस्य परिकल्पनायामावश्यकमपरिहार्यं च । जीवस्य भोगापवर्गसाधनायैव सर्गस्यारम्भः । न च भोगः सङ्कल्पस्वातन्त्र्यमन्तरा सम्भवतीति कर्मफलभोगव्यवस्थामुखेन सङ्कल्पस्वातन्त्र्यमेव विश्वव्यवस्थायाः सम्पादकम्, न जडवादो न वा मायावादो विश्वपरिकल्पनां प्रतिपादयितुं समर्थ इति ॥



# एकविंशः परिच्छेदः

## दण्डस्य सिद्धान्ताः

समाजस्य जनस्य वाऽमङ्गलकरं कर्म अशुभमसत्कर्म च व्यपदिश्यते। तच्च प्रयोजकभेदान्निमित्तभेदाद् वा बहुधा भिद्यते। तत्र किञ्चिदाधिभौतिकं प्राकृतिकं वा, किञ्चिद् भ्रान्तिजन्यं किञ्चिच्च बुद्धिपूर्वकं नैतिकमसत्कर्मेति समासतस्त्रिविधोऽत्र विभागः। तत्र भूकम्पानावृष्टिजलप्लावनादिकं प्राकृतिकममङ्गलकरं कर्म। तच्च न पुरुषव्यापारतन्त्रमिति न नैतिकनिर्णयगोचरम्। द्वितीयं बुद्धिदोषप्रभवं भ्रान्तिजन्यं कर्म। तदपि न नैतिकनिर्णयमर्हति। बुद्धिदोषप्रभवा हि भ्रान्तिः। बुद्धिदोषात् कर्मणां यथार्थं गुणं दोषं वाऽवधारयितुमक्षमो जनस्तस्य विपरीतं मूल्यं निर्धारयति, ततश्च तत्र प्रवर्तते। एवमनुमानजन्ये नैतिकनिर्णये दूषितोपनयवशादनैतिकेऽपि कर्मणि नैतिकत्वमुपसंहरति। ततश्चानैतिकेऽपि कर्मणि नैतिकत्वबुद्ध्या प्रवर्तते। तदिदं भ्रान्तिजन्यमपि कर्म क्षन्तव्यकल्पम्। यत्र तु बुद्धिपूर्वकं विपरीतं मूल्याङ्कनं क्रियते, तन्नैतिकमशुभं कर्म वचनीयं दण्डनीयं दण्डप्रयोजकं वा भवति। प्राकृतिकमाधिभौतिकं वाऽशुभं प्रति न मनुष्यस्य किञ्चिदप्युत्तरदायित्वम्। भ्रान्तिजन्यमबुद्धिपूर्वकं वा कृतं कर्मापि क्षन्तव्यकल्पम्। यत्तु बुद्धिपूर्वकं क्रियमाणमशुभं कर्म, तदेव तत्कर्तुर्दण्डप्रयोजकं भवति।

### पापाधर्मापराधाः

दण्डप्रयोजकमपि कर्म पापम्, अधर्मः, अपराधश्चेति त्रिविधं भवति। तत्रासत्कर्मणो बाह्यं स्वरूपं 'पाप'शब्देन, आभ्यन्तरं च स्वरूपम् 'अधर्म'शब्देन व्यवह्रियते। सत्कर्मणामभ्यासो धर्मप्रयोजक इति पूर्वमुपपादितम्, तद्वदेव असत्कर्मणामभ्यासोऽधर्मप्रयोजकः। चरित्रस्योत्कर्षो धर्मस्तदपकर्षश्चाधर्म इत्याख्यायते। बुद्धिपूर्वकं कर्तव्यानामुल्लङ्घनमकर्तव्यानां चानुष्ठानमधर्माय कल्पते। अकर्तव्यानुष्ठानाभ्यासादान्तरो धर्मः कश्चन अधर्म इत्युच्यते।

अधर्मस्य बाह्याभिव्यक्तिश्च पापपदवाच्या। बुद्धिपूर्वकं कर्तव्यस्य बाह्यमुल्लङ्घनमकर्तव्यस्य च बाह्यमनुष्ठानमेवाधर्मस्य बाह्यं स्वरूपम्, तदेव च पापपदवाच्यम्। पापिनामपि जनानामन्तःकरणे शुभाभिप्रायाणां नात्यन्ताभावः, किन्तु सङ्कल्पशक्तेर्दौर्बल्याच्छुभाभिप्रायस्य बाह्यमनुष्ठानमशक्यं भवति। एवमशुभाभिप्रायाणामपि सर्वेषां न बाह्याभिव्यक्तिः। बाह्यव्यापारेणाभिव्यक्ता मनसि च बद्धमूला अशुभाभिप्राया जनस्य चरित्रं दूषयन्ति। कदाचिद् बाह्यव्यापाराभिव्यक्तौ तेषामुच्छेदोऽपि जायते। एवं च शुभाभिप्रायस्य मूल्यं शुभकर्मापेक्षया न्यूनम्, किन्त्वशुभकर्मापेक्षया अशुभाभिप्रायश्चरित्रदोषमुत्पाद्याधिकममङ्गलमुपजनयति।

एवं चाधर्मस्य बाह्याभिव्यक्तिः पापपदवाच्या, पापस्यान्तरं स्वरूपं चाधर्मपदवाच्यं भवतीति पापाधर्मयोर्भेदः। ईश्वरसमाजयोश्चाभिसम्बन्धात् पापापराधयोर्भेदः पूर्वं विधीयते स्म। ईश्वराज्ञासमुल्लङ्घनजन्यं पापं सामाजिकनियमोल्लङ्घनजन्यश्चापराध इति पूर्वाचार्यकृतः पापापराधयोर्भेदः। इदानीं तु राजनियमावहेलनमपराधः, तद्व्यतिरिक्तं चासत्कर्म पापमित्युच्यते। समाजविरुद्धमपि क्रियमाणं न सर्वं कर्म अपराधपदवाच्यम्, यदेव राजनियमोल्लङ्घनात्मकं राजदण्डार्हं च, तदेव अपराधपदवाच्यं भवति। एवं स्तेयं राजनियमविरुद्धं राजदण्डार्हं च भवतीति तदपराधमध्ये गण्यते। अकृतज्ञता च न राजदण्डप्रयोजिकेति नापराधः, किन्त्वपराधव्यतिरिक्तापि साऽसत्कर्मरूपत्वात् पापमित्याख्यायते; तया च लोकनिन्दाभाजनं भवति मानवः।

यो हि राजाज्ञोल्लङ्घनात्मकमपराधं करोति, स एव राजन्यायेन दण्डनीयो भवति। तत्र दण्डस्यौचित्यसाधनाय (१) निवर्तनवादः, (२) सुधारवादः, (३) प्रतीकारवादश्चेति त्रिविधाः समुपलभ्यन्ते विवेचकानां सिद्धान्ताः।

१. तत्र निवर्तनवादे तादृशापराधात् परेषां निवर्तनमेव न्यायप्रयोजकं दण्डव्यवस्थापकं चाभ्युपगम्यते। अपराधिनं दण्डयतो नान्येऽपि तादृशमपराधं कुर्युरित्ययमेवाभिप्रायो भवति राज्यस्य। अपराधिनो दण्डविधानेन जनान्तराणामपराधान्निवर्तनमेव न्यायस्याभिप्रेतम्। नहि मेषस्तेयाय मेषस्तेनो दण्ड्यते, किन्तु मेषस्तेयं मा भूदित्येव दण्ड्यत इति प्रसिद्धं निवर्तनवादिनां न्यायसूत्रम्।

किन्त्वस्मिन् मते मानवस्य मानवत्वं साध्यरूपतामपहाय साधनरूपतामुपैतीति नायं निवर्तनवादो परेभ्यस्तदालोचकेभ्यो रोचते। परेषां निवर्तनाय शिक्षणाय वा कस्यचित् पुरुषस्य दण्डविधानं न न्याय्यम्। 'मानवस्य मानवत्वं साध्यरूपमेव यथा भवेत्तथा व्यवहर्तव्यम्' इति काण्टमहोदयस्य सूत्रं पूर्वं प्रतिपादितमेव। निवर्तनवादे च पुरुषस्य साधनरूपताभ्युपेता भवतीति परेषां निवर्तनाय शिक्षणाय वा परस्मै कष्टप्रदानमनुचितमन्याय्यं चेति निवर्तनवादस्यालोचकानामभिप्रायः।

२. सुधारवादो हि दण्डस्यापरः सिद्धान्तः। सुधारवादे चापराधिनः सुधाराय तादृशापराधान्तरनिवर्तनाय दण्डस्य विधानम्, न तु परेषां निवर्तनाय शिक्षणाय वा।

(क) अपराध-मानव-विज्ञानम् (क्रिमिनल एन्थ्रापॉलॉजी), (ख) अपराध-समाजविज्ञानम् (क्रिमिनल सोशियालॉजी), (ग) मनोविश्लेषणविज्ञानम् (क्रिमिनल साइकॉलाजी) चेति त्रिविधमपि विज्ञानमस्य सिद्धान्तस्य समर्थकम्। आधुनिकयुगस्य भावनानुरूपत्वादयं सिद्धान्तः प्रायशोऽभ्युपेयत एवैदानीन्तनैः।

(क) मानसोन्मादस्य वंशक्रमागतस्यार्जितस्य पतनस्य वाऽवस्थाविशेषात्मको रोगविशेषरूप एवापराध इति सिद्धान्तमधिकृत्य अपराधविज्ञानं प्रवर्तते। अपराधस्य रोगात्मकत्वादपराधिनश्चिकित्सैव विधेया, न तु दण्डविधानम्। सा च रोगस्य निदानपूर्वकं चिकित्सालयेषु मत्तालयेषु सुधारालयेषु वा विधेया। एवमपराधविज्ञाने बुद्धिपूर्वकं नैतिकनियमस्य समुल्लङ्घनं नापराधस्य प्रयोजकम्, किन्तु शारीरिकं वैलक्षण्यमेव तत्प्रयोजकम्, शरीरदोषादेव मानवोऽपराधे प्रवर्तते। यथा—चौर्योन्माद एव चौर्ये प्रवर्तयति, येनात्मी-

यानामपि जनानां वस्तुजातं चोरयितुं प्रवर्तते चौरः। एवं सर्वेषामप्यपराधानां शरीरदोषो रोगो वा प्रयोजक इति निदानपूर्वकं चिकित्सालयेषु, मत्तालयेषु, सुधारालयेषु वा चिकित्स्या एवापराधिनः, न तु कारागारेषु निक्षेप्तव्या दण्डनीया वेत्यपराधविज्ञान-वादिनां मतम्।

तदपि न समीचीनम्; नहि सर्वेऽपराधा मानसोन्मादजन्याः शरीरदोषजन्या वा। न वा उन्मादजन्या अपराधा दण्ड्यन्ते, किन्तु चिकित्स्यन्ते एव तादृशापराधकारिण उन्मत्ता जनाः। उन्मत्तानां सम्बन्धिनोऽन्ये च तेषां गतिविधिं निपुणं निरीक्षन्ते, समुचितां च व्यवस्थां कुर्वन्त्येव। किञ्चोन्मादे व्यक्तेर्व्यक्तित्वमेव विलुप्यत इति तेन सहान्यथापि व्यवहारः क्रियते। किन्तु सर्वेऽपराधा उन्मादप्रभवा एव न, बुद्धिपूर्वकमपि नैतिकनियमाना-मवहेलायां प्रवृत्ता दृश्यन्ते लोकाः। ये तु बुद्धिपूर्वकं नैतिकनियमानतिवर्तन्ते, ते दण्ड-नीया एव, न तु चिकित्स्याः। अन्यथा रोगात्मका उन्मादप्रभवाश्च सर्वेऽप्यपराधा इत्यभ्युप-गम्यमाने तु नीतिशास्त्रस्य मूलोच्छेद एव प्रसज्येत। अस्मिन् मते पुण्यपापयोः पुरस्कार-दण्डयोर्विधानं च सर्वमपि निष्फलमापद्येत।

( ख ) अपराधसमाजविज्ञानमपि ( क्रिमिनल सोशियालॉजी ) सुधारवादस्य सम-र्थनं करोति। तदपि न समीचीनम्; अपराधसमाजविज्ञाननये सामाजिकमार्थिकं च वैषम्य-मेव अपराधप्रयोजकम्। चौरस्यार्थिकी स्थितिस्तं चौर्ये प्रवर्तयति। यावत् सर्वेषां सामाजिकी आर्थिकी स्थितिरेकरूपा समा च न जायते, तावदपराधानां दमनमपराधिनां दण्डविधान-मनुचितं हानिप्रदं च भवतीत्यपराधसमाजवादिनां मतम्।

तदपि न समीचीनम्, नहि सर्वेऽपराधाः सामाजिकार्थिकपरिस्थितीनां वैषम्य-प्रभवाः। नहि सामाजिकमार्थिकं वा वैषम्यमपराधमात्रस्य प्रयोजकम्। धनिनोऽपि चौर्यकर्मणि चौर्यव्यापारे च प्रवर्तन्ते, निर्धना अपि तद्विरता अस्तेयपरायणाश्च भवन्ति। तस्मान्न परिस्थितिवैषम्यमपराधमात्रस्य निमित्तमिति तदालोचकानां मतम्।

( ग ) मनोविश्लेषणविज्ञानमपि सुधारवादस्य तृतीयं समर्थकम्। अस्मिन् मते मनोविश्लेषणविज्ञाने बलादभिभूतानां मनोग्रन्थीनां ( रिप्रैस्ड कम्प्लैक्सेज ) असफलयौन-प्रवृत्तीनां द्वेषप्रवृत्तीनां च प्रभावेणैव जनोऽपराधे वचनीयेऽसामाजिके कर्मणि प्रवर्तते। अत एव तादृशानामपराधानां प्रतिविधानं चिकित्सासाध्यं शिक्षासाध्यं वा भवति, न दण्डसाध्यम्। बलादभिभूतानामचेतनमनोग्रन्थीनां वाऽनुसन्धानं समाजस्वीकार्ये च मार्गे प्रवर्तनं बहूनामसामाजिककृत्यानामपराधानां च समुचितं प्रतिविधानं भवतीति फ्रायड-महोदयस्य मतम्।

किन्तु सर्वेऽपराधा अभिभूतानां मनोग्रन्थीनां प्रभावादेव न भवन्ति। तत्र केचन ( क ) मानसोन्मादजन्याः, ( ख ) केचन शरीरदोषजन्याः, ( ग ) केचन च आवेशजन्या अस्थायिमनोग्रन्थिजन्या वा, ( घ ) केचन भ्रान्तिप्रभवाः, ( ङ ) केचन च बुद्धिपूर्वकं नैतिकनियमानामवहेलात्मका भवन्ति। तत्राद्यानां प्रमत्तालयेषु सुधारालयेषु चौषधोपचारा-दिभिः प्रतिविधानं कार्यम्। द्वितीयविधानां शरीरदोषप्रभवाणां चिकित्सालयेषु यथोचित-चिकित्सया प्रतिविधानं कार्यम्। तृतीयप्रकाराणामपराधानां प्रतिविधानाय मनोविश्लेषण-

विज्ञानपद्धतिरुपयुज्यते । चतुर्थप्रकाराणामपराधानां च भ्रान्तिमूलमनुसन्धाय यथा स्वभ्रान्तिमनुभवति पुरुषस्तथाविधः प्रयत्न एव प्रतीकारोपायः । अन्तिमस्तु परमार्थतोऽपराध एव, स च दण्डैकसाध्य इति ।

३. प्रतीकारवादश्च तृतीयो दण्डस्य सिद्धान्तः । नैतिकनियमस्य प्रभुत्वमेव समाजस्य व्यवस्थापकम् । यः कश्चिदपि तदवहेलनां करोति, तस्य दण्डविधानमेव नैतिकनियमस्य प्रभुत्वस्थापनायावश्यकम् । दण्डो हि न्यायोचितो व्यापारः । नहि दण्डव्यवस्थामन्तरा नैतिकनियमस्य गौरवं प्रभुत्वं च संस्थापितं भवति । अतो नैतिकनियमस्य प्रभुत्वसम्पादनाय समाजव्यवस्थायाः परिरक्षणाय च दण्डव्यवस्था परमावश्यकी । अस्मिन् प्रतीकारसिद्धान्ते च मृत्युदण्डस्यात्यौचित्यमेव । सुधारवादे तु मृत्यूत्तरं सुधारस्यासम्भवाद् मृत्युदण्डो नोपपद्यते । नेत्रस्य कृते नेत्रमिति प्रतीकारवादिनां सिद्धान्तः । तस्मात् प्राणानां कृते प्राणा अपि ग्राह्या इति मृत्युदण्डस्यौचित्यमेव ।

अयं प्रतीकारवादः प्रतिहिंसाश्रितत्वादनैतिक इति केषाञ्चिद् विप्रतिपत्तिः । सा तु नोपपन्ना । प्रतिहिंसा हि व्यक्तिगतद्वेषमूलिका भवतीति कृत्वा धर्मशास्त्रे प्रतिषिद्धा । किन्तु न्यायाधीशेन क्रियमाणा न्यायव्यवस्था न व्यक्तिगतविद्वेषाश्रिता, किन्तु तस्यापराधिनः स्वकृतस्य कर्मणः प्रतिदानरूपैव । तस्मान्न धर्मशास्त्रविगर्हिता दण्डव्यवस्था । येन यादृक् कर्म कृतम्, तस्य यथायोग्यं प्रतिदानमुचितं सर्वथा न्याय्यं च । अत एव अरिस्टाटिलमहोदयो दण्डस्य ऋणात्मकपुरस्काररूपत्वं प्रतिपादयति । यो हि पुरुषो बुद्धिपूर्वकं नैतिकनियमस्यावहेलनां करोति, स तस्य कर्मण ऋणात्मकेन पुरस्कारेण सत्कर्तव्य एव । दण्डप्रदानं तस्याधिकारानुरूपमेव, न तु तद्विपरीतम् । काण्टमहोदयोऽपि प्रतीकारवादमेव समर्थयते । तन्मते पुरुषेणापराधो विहित इत्येव स दण्डनीयो भवति, न तु परेषां निवर्तनाय शिक्षणाय वा । हेगलमहोदयोऽपि दण्डमपराधिनोऽधिकारं पुरस्कारं च मनुते । ब्रेडलेमहोदयस्यापि मते दण्ड एव दण्डस्य प्रयोजनम्, न तु सुधारो निवर्तनं वा । दण्डनीयोऽयं जन इति मत्वैव स दण्डनीयः, न तु निमित्तान्तरमत्र प्रयोजकम् । अपरदृष्ट्या दण्डप्रदानमनुचितमनैतिकं च । दण्डो हि न्याय्यव्यापारो नैतिकनियमोल्लङ्घनस्य प्रतीकारश्च ।

एवं प्रतीकारवादस्यावलम्बनेन अन्येषां निवर्तनमपराधिनश्च सुधारोऽप्यानुषङ्गिकरूपेण भवति । तस्मादयं प्रतीकारवादः सिद्धान्तान्तरापेक्षया समीचीनः । अयं च १. मृदुरूपः २. कठोररूपश्चेति द्विविधः । कठोररूपे प्रतीकारवादे अपराधतारतम्याद् दण्डतारतम्यम् । स्वल्पेऽपराधे स्वल्पो गभीरे च गभीरो दण्डः । न च परिस्थित्यादीनां विचारस्य कश्चनावसरस्तत्र । मृदुरूपे तु परिस्थित्यादिविचारोऽपि दण्डकाले विघटते । तदनुरूपं च मार्दवं दण्डविधाने सम्भाव्यते । अयमेव पक्षः श्रेयान् ॥



